४० राजानं किं मोचयामि युष्माकम् इच्छा का? तदा ते सर्व्वे रुवन्तो
व्याहरन् एनं मानुषं नहि बरब्बां मोचय। किन्तु स बरब्बा दस्युरासीत्।

---

१९ ऊनविंशोऽध्यायः।

१ पिलातेन यीशुं निर्दोषं प्राप्यापि तस्मै कशाप्रहारस्य मस्तके कण्टकमुकुटस्य च दानं ८ यीशुं मोचयितुं पिलातस्य चेष्टा १३ यिहूदीयानां तुष्ट्यर्थं तं क्रुशे वेधितुम् आज्ञापनं १७ तस्य क्रुशे वेधनं २३ तस्य वस्त्रस्य विभागः २५ स्वमातरं प्रति तस्य कथा २८ तस्य मृत्युः ३१ तस्य पार्श्वे शूलाघातः ३८ तस्य श्मशाने स्थापनञ्च।

१ पिलातो यीशुम् आनीय कशया प्राहारयत्। पश्चात् सेनागणः
२ कण्टकनिर्म्मितं मुकुटं तस्य मस्तके समर्प्य वार्त्ताकीवर्णं राजपरिच्छदं
३ परिधाप्य हे यिहूदीयानां राजन् नमस्कार इत्युक्त्वा तं चपेटेनाहन्तुम्
४ आरभन्त। तदा पिलातः पुनरपि बहिर्गत्वा लोकान् अवदद् अस्य कमप्य-
पराधं न लभेऽहं पश्यत तद् युष्मान् ज्ञापयितुं युष्माकं सन्निधौ बहिरेनं
५ आनयामि। ततः परं यीशुः कण्टकमुकुटवान् वार्त्ताकीवर्णवसनवांश्च बहि-
६ रागच्छत्; ततः पिलात उक्तवान् एनं मनुष्यं पश्यत। तदा प्रधानयाजकाः
पदातयश्च तं दृष्ट्वा, एनं क्रुशे विध, एनं क्रुशे विध इत्युक्त्वा रवितुं आरभन्त।
ततः पिलातः कथितवान् यूयं स्वयम् एनं नीत्वा क्रुशे विधत, अहम् एतस्य
७ कमप्यपराधं न प्राप्तवान्। यिहूदीयाः प्रत्यवदन् अस्माकं या व्यवस्थास्ते
तदनुसारेणास्य प्राणहननम् उचितं यतोयं स्वम् ईश्वरस्य पुत्त्रमवदत्।
८ पिलात इमां कथां श्रुत्वा महात्रासयुक्तः सन् पुनरपि राजगृहं
९ आगत्य यीशुं पृष्टवान् त्वं कुत्रत्यो लोकः? किन्तु यीशुस्तस्य किमपि
१० प्रत्युत्तरं नावदत्। ततः पिलातः कथितवान् त्वं किं मया सार्द्धं कथां न
कथयिष्यसि? त्वां क्रुशे वेधितुं वा मोचयितुम् शक्ति र्ममास्ते इति
११ किं त्वं न जानासि? तदा यीशुः प्रत्यवदद् ईश्वरेण नादत्ते ममोपरि तव
किमप्यधिपतित्वं नाभविष्यत् तथापि यो जनो मां तव हस्ते समार्पयत्
१२ तस्य महापातकं जातम्। तदारभ्य पिलातस्तं मोचयितुं चेष्टितवान्

किन्तु यिहूदीया रवेणो व्याहरन् यदीमं मानवं त्यजसि तर्हि त्वं
कैसरस्य मित्रं न भवसि यो जनः स्वं राजानं वक्ति स एव कैसरस्य
विरुद्धां कथां कथयति।

एतां कथां श्रुत्वा पिलातो यीशुं बहिरानीय निस्तारोत्सवस्य १३
आसादनदिनस्य द्वितीयप्रहरात् पूर्व्वं प्रस्तरबन्धननाम्नि स्थाने अर्थात्
इब्रीयभाषया यद् गब्बिथा कथ्यते तस्मिन् स्थाने विचारासन उपाविशत्।
अनन्तरं पिलातो यिहूदीयान् अवदद् युष्माकं राजानं पश्यत। किन्तु १४
एनं दूरीकुरु, एनं दूरीकुरु, एनं क्रुशे विध इति कथां कथयित्वा ते १५
रवितुम् आरभन्त; तदा पिलातः कथितवान् युष्माकं राजानं किं क्रुशे
वेधिष्यामि? प्रधानयाजका उत्तरम् अवदन् कैसरं विना कोपि राजा-
स्माकं नास्ति। ततः पिलातो यीशुं क्रुशे वेधितुं तेषां हस्तेषु समार्पयत् १६
ततस्ते तं धृत्वा नीतवन्तः।

ततःपरं यीशुः क्रुशं वहन् शिरः कपालम् अर्थाद् यद् इब्रीयभाषया १७
गुल्गलतां वदन्ति तस्मिन् स्थान उपस्थितः। ततस्ते मध्यस्थाने तं तस्योभयपार्श्वे १८
द्वावपरौ क्रुशेऽविधन्। अपरम् एष यिहूदीयानां राजा नासरीययीशुः १९
इति विज्ञापनं लिखित्वा पिलातस्तस्य क्रुशोपरि समयोजयत्। सा २०
लिपिः इब्रीययूनानीयरोमीयभाषाभि र्लिखिता; अपरञ्च यीशोः क्रुश-
वेधनस्थानं नगरस्य समीपं तस्माद् बहवो यिहूदीयास्तत् पठितुम्
आरभन्त। यिहूदीयानां प्रधानयाजकाः पिलातमिति न्यवेदयन् यिहू- २१
दीयानां राजेति वाक्यं न किन्तु एष स्वं यिहूदीयानां राजानम्
अवदद् इत्थं लिखतु। ततः पिलात उत्तरं दत्तवान् यल्लिखनीयं २२
तल्लिखितवान्।

इत्थं सेनागणो यीशुं क्रुशे विधित्वा तस्य परिधेयवस्त्रं चतुरो भागान् २३
कृत्वा एकैकसेना एकैकभागम् अगृह्लात् तस्योत्तरीयवस्त्रञ्चागृह्लात्। किन्तू-
त्तरीयवस्त्रं सूचिसेवनं विना सर्व्वम् ऊतं तस्मात्ते व्याहरन् एतत् कः
प्राप्स्यति तन्न खण्डयित्वा तत्र गुटिकापातं कुर्म्मः।

२४ 'विभजन्तेऽधरीयं मे वसनं ते परस्परं।
ममोत्तरीयवस्त्रार्थं गुटिकां पातयन्ति च।'
इति यद्वाक्यं धर्म्मपुस्तके लिखितमास्ते तत् सेनागणेनेत्थं व्यवहरणात्
सिद्धमभवत्।
२५ तदानीं यीशोर्माता मातु र्भगिनी च या क्लियपा भार्य्या मरियम्
२६ मग्दलनी मरियम् च एतास्तस्य क्रुशस्य सन्निधौ समतिष्ठन्। ततो यीशुः
स्वमातृप्रियतमशिष्यौ समीपे दण्डायमानौ विलोक्य मातरम् अवदत्
२७ हे योषिद् एनं तव पुत्रं पश्य शिष्यन्त्ववदद् एनां तव मातरं पश्य। ततः स
शिष्यस्तद्घटिकायां तां निजगृहं नीतवान्।
२८ अनन्तरं सर्व्वं कर्म्माधुना सम्पन्नमभूत् यीशुरिति ज्ञात्वा धर्म्मपुस्तकस्य
२९ वचनं यथा सिद्धं भवति तदर्थम् अकथयत् मम पिपासा जाता। तत-
स्तस्मिन् स्थाने अम्लरसेन पूर्णपात्रस्थितत्या ते स्पञ्जमेकं तदम्लरसेनार्द्रीकृत्य
३० एसोब्नले तद् योजयित्वा तस्य मुखस्य सन्निधावस्थापयन्। तदा यीशु-
रम्लरसं गृहीत्वा सर्व्वं सिद्धम् इति कथां कथयित्वा मस्तकं नमयन्
प्राणान् पर्य्यत्यजत्।
३१ तद्दिनम् आसादनदिनं तस्मात् परेऽहनि विश्रामवारे देहा यथा
क्रुशोपरि न तिष्ठन्ति यतः स विश्रामवारो महादिनमासीत् तस्मात्
यिहूदीयाः पिलातनिकटं गत्वा तेषां पादभञ्जनस्य स्थानान्तरनयनस्य
३२ चानुमतिं प्रार्थयन्त। अतः सेना आगत्य यीशुना सह क्रुशे हतयोः
३३ प्रथमद्वितीयचोरयोः पादान् अभञ्जन्; किन्तु यीशोः सन्निधिं गत्वा स मृत
३४ इति दृष्ट्वा तस्य पादौ नाभञ्जन्। पश्चाद् एका सेना शूलाघातेन तस्य
३५ कुक्षिम् अविधत् तत्क्षणात् तस्माद् रक्तं जलञ्च निरगच्छत्। यो जनोऽस्य
साक्ष्यं ददाति स स्वयं दृष्टवान् तस्येदं साक्ष्यं सत्यं तस्य कथा युष्माकं
३६ विश्वासं जनयितुं योग्या तत् स जानाति। 'तस्यैकम् अस्थ्यपि न भंक्ष्यति,'
इदं धर्म्मपुस्तकस्य वचनं यथा सफलं भवति तदर्थम् एताः सर्व्वघटना अभ-
३७ वन्। तद्वद् अन्यशास्त्रेपि लिख्यते। यथा

'दृष्टिपातं करिष्यन्ति तेऽविधन् यन्तु तम्प्रति।'

अरिमथीयनगरस्य युषफ्नामा शिष्य एक आसीत् किन्तु यिहूदीयेभ्यो ३८
भयात् प्रकाशितो न भवति स यीशो र्देहं नेतुं पिलातस्यानुमतिं प्रार्थयत
ततः पिलातेन तस्मिन् अनुमते सति स गत्वा यीशो र्देहम् अनयत्। अपरं ३९
यो निकदीमो रात्रौ यीशोः समीपम् अगच्छत् सोपि गन्धरसेन मिश्रितं
प्रायेण पञ्चाशत्सेटकमगुरुं गृहीत्वागच्छत्। ततस्ते यिहूदीयानां श्मशाने ४०
स्थापनरीत्यनुसारेण तत्सुगन्धिद्रव्येण सहितं तस्य देहं वस्त्रेणावेष्टयन्। अप- ४१
रञ्च यत्र स्थाने तं क्रुशेऽविधन् तस्य निकटस्थोद्याने यत्र किमपि मृतदेहं
कदापि नास्थाप्यत तादृशम् एकं नूतनं श्मशानम् आसीत्। यिहूदीयानाम् ४२
आसादनदिनागमनात् ते तस्मिन् समीपस्थश्मशाने यीशुम् अशाययन्।

---

२० विंशोऽध्यायः।

१ यीशोरुत्थानस्य प्रकाशः ११ मग्दलिनीमरियमे तस्य दर्शनदानं १९ शिष्येभ्यो-
दर्शनदानं २४ थोमै दर्शनदानं ३० सुसंवादलेखकस्याभिप्रायश्च।

तदनन्तरं सप्ताहस्य प्रथमदिने ऽतिप्रत्यूषेऽन्धकारे तिष्ठति मग्दलिनी- १
मरियम् तस्य श्मशानस्य निकटं गत्वा श्मशानस्य मुखात् प्रस्तरमपसारि-
तम् अपश्यत्। पश्चाद् धावित्वा शिमोन्पितराय यीशोः प्रियतमशिष्याय २
च तां कथाम् अकथयत् लोकाः श्मशानात् प्रभुम् नीत्वा कुत्रास्थापयन्
तद् वक्तुं न शक्नोमि। अतः पितरः सोन्यशिष्यश्च बहिर्भूत्वा श्मशानस्थानं ३
गन्तुम् आरभेताम्; उभौ धावन्तौ तदा सोन्यशिष्यः पितरं पश्चात् त्यक्त्वा ४
पूर्व्वं श्मशानस्थान उपस्थितवान्। तदा प्रह्वीभूय स्थापितवस्त्राणि दृष्टवान् ५
किन्तु न प्राविशत्। अनन्तरं शिमोन्पितर आगत्य श्मशानस्थानं प्रविश्य ६
स्थापितवस्त्रं वस्त्रात् पृथक् स्थानान्तरे स्थापितं मस्तकस्य वस्त्रञ्च दृष्टवान्। ७
ततः श्मशानस्थानं पूर्व्वम् आगतो योन्यशिष्यः सोपि प्रविश्य तादृशं दृष्ट्वा ८
व्यश्वसीत्। यतः श्मशानात् स उत्थापयितव्य एतस्य धर्म्मपुस्तकवचनस्य ९
भावं ते तदा बोद्धुं नाशक्नुवन्। अनन्तरं तौ द्वौ शिष्यौ स्वं स्वं गृहं १०
परावृत्यागच्छताम्।

११ ततःपरं मरियम् श्मशानद्वारस्य वहिः स्थित्वा रोदितुम् आरभत
१२ ततो रुदती प्रह्वीभूय श्मशानं विलोक्य यीशोः शयनस्थानस्य शिरःस्थाने
१३ च द्वयो र्दिशो र्द्वौ स्वर्गीयदूतावुपविष्टौ समपश्यत्। अनन्तरं तौ पृष्टवन्तौ हे
नारि कुतो रोदिषि? सावदत् लोका मम प्रभुं नीत्वा कुत्रास्थापयन् इति
१४ न जानामि। इत्युक्त्वा मुखं परावृत्य यीशुं दण्डायमानम् अपश्यत् किन्तु स
१५ यीशुरिति सा ज्ञातुं नाशक्नोत्। तदा यीशुस्ताम् अपृच्छत् हे नारि
कुतो रोदिषि? कं वा मृगयसे? ततः सा तम् उद्यानसेवकं ज्ञात्वा व्याहरत्
हे महेच्छ त्वं यदीतः स्थानात् तं नीतवान् तर्हि कुत्रास्थापयस्तद् वद
१६ तत्स्थानात् तम् आनयामि। तदा यीशुस्ताम् अवदत् हे मरियम्! ततः सा
१७ परावृत्य प्रत्यवदत् हे रब्बूनी अर्थात् हे गुरो। तदा यीशुरकथयत् मां
धृत्वा मा स्थापय, इदानीं पितुः समीपे ऊर्द्ध्वगमनं न करोमि किन्तु यो
मम युष्माकञ्च पिता मम युष्माकञ्चेश्वरस्तस्य निकट ऊर्द्ध्वगमनं कर्त्तुम्
१८ उद्यतोस्मि, इमां कथां त्वं गत्वा मम भ्रातृगणं ज्ञापय। ततो मग्दलिनी-
मरियम् तत्क्षणाद् गत्वा प्रभुस्तस्यै दर्शनं दत्वा कथा एता अकथयद् इति
वार्त्तां शिष्येभ्योकथयत्।

१९ ततः परं सप्ताहस्य प्रथमदिनस्य सन्ध्यासमये शिष्यगण एकत्र मिलित्वा
यिहूदीयेभ्यो भिया द्वाररुद्धम् अकुर्व्वन् एतस्मिन् काले यीशुस्तेषां मध्य-
२० स्थाने तिष्ठन् अकथयद् युष्माकं कल्याणं भूयात्। इत्युक्त्वा निजहस्तं
२१ कुक्षिञ्च दर्शितवान् ततः शिष्याः प्रभुं दृष्ट्वा हृष्टा अभवन्। यीशुः पुनर-
वदद् युष्माकं कल्याणं भूयात् पिता यथा मां प्रैषयत् तथाहमपि युष्मान्
२२ प्रेषयामि। इति कथयित्वा स तेषामुपरि दीर्घप्रश्वासं दत्त्वा कथितवान्
२३ पवित्रम् आत्मानं गृह्लीत। यूयं येषां पापानि मोचयिष्यथ ते मोचयिष्यन्ते
येषाञ्च पापानि न मोचयिष्यथ ते न मोचयिष्यन्ते।

२४ यीशोरागमनकाले द्वादशमध्ये गणितो यमकथोमानामा शिष्यस्तैः
२५ सार्द्धं नासीत्। अतो वयं प्रभुम् अपश्याम कथायामस्याम् अन्यशिष्यैस्तस्मै
कथितायां मत्यां सोवदत् तस्य हस्तयो र्लौहकीलकानां चिह्नं न विलोक्य

तच्चिह्नम् अङ्गुल्या न स्पृष्ट्वा तस्य कुक्षौ हस्तं नारोप्य चाहं न विश्वसि-
ष्यामि। अपरम् अष्टमेऽह्नि गते सति शिष्यगणः थोमासहित एकत्र २६
मिलित्वा द्वारं रुद्ध्वाभ्यन्तर आसीद् एतर्हि यीशुस्तेषां मध्यस्थाने तिष्ठन्
अकथयद् युष्माकं कुशलं भूयात्। पश्चात् थोमै कथितवान् अत्रस्थाने त्वम् २७
अङ्गुलीम् अर्पयित्वा मम करौ पश्य करं प्रसार्य्य मम कुक्षावर्पय नाविश्वस्य
विश्वसिहि। तदा थोमा अवदत् हे मम प्रभो हे मदीश्वर। यीशुरकथ- २८
यत् हे थोमा मां निरीक्ष्य विश्वसिषि ये न दृष्ट्वा विश्वसन्ति तएव धन्याः। २९
एतदन्यानि यानि पुस्तकेऽस्मिन् नालिख्यन्त तादृशान्यनेकान्याश्चर्य्य- ३०
कर्म्माणि यीशुः शिष्याणां पुरस्ताद् अकरोत्; किन्तु यीशुरीश्वरस्याभि- ३१
षिक्तः पुत्र एतद् यथा यूयं विश्वसिथ विश्वस्य च तस्य नाम्ना परमायुः
प्राप्ता भवथ तदर्थम् एतानि सर्व्वाण्यलिख्यन्त।

---

२१ एकविंशोऽध्यायः।

१ तिविरियाह्रदे अर्थाद् गालीलसिन्धौ शिष्येभ्यो दर्शनदानं १५ पितरेण सह यीशोः कथनं २० योहनि तस्य कथा २४ समाप्तेः कथा च।

ततःपरं तिविरियाजलधेस्तटे यीशुः पुनरपि शिष्येभ्यो दर्शनं दत्त- १
वान् दर्शनस्याख्यानमिदम्। शिमोन्पितरः यमजथोमा गालीलीय- २
कान्नानगरनिवासिनिथनियेल् सिवदेः पुत्रौ अन्यौ द्वौ शिष्यौ च द्वेष्वे
यदैकस्मिन् स्थाने मिलिता आसन् तदा शिमोन्पितरोऽकथयत्
मत्स्यान् धर्तुं यामि। ततस्ते व्याहरन् तर्हि वयमपि त्वया सार्द्धं यामः ३
तदा ते वहिर्गताः सन्तः क्षिप्रं नावम् आरोहन् किन्तु तस्यां रजन्याम्
एकमपि न प्राप्नुवन्। अनन्तरं प्रभाते सति यीशुस्तटे स्थितवान् किन्तु ४
यीशुरिति शिष्या ज्ञातुं नाशक्नुवन्। तदा यीशुरपृच्छत् हे वत्सा ५
युष्माकं सन्निधौ किञ्चित् खाद्यद्रव्यम् आस्ते? तेऽवदन् किमपि नास्ति।
तदा स कथितवान् नौकाया दक्षिणपार्श्वे जालं निक्षिपत ततः प्राप्स्यथ ६
तस्मात् तैर्निक्षिप्ते जाले मत्स्या एतावन्तो अपतन् येन ते जालमाकृष्य
नोत्तोलयितुं शक्ताः। तस्माद् यीशोः प्रियतमशिष्यः पितरायाकथयत् ७

एष प्रभु र्भविष्यति एष प्रभुरिति वाक्यं श्रुत्वैव शिमोन् पितरो नग्नताहेतो
८ र्मत्स्यधारिण उत्तरीयवस्त्रं परिधाय ह्रदं प्रत्युदलम्फयत्। अपरे शिष्या
मत्स्यैः सार्द्धं जालम् आकर्षन्तः क्षुद्रनौकां वाहयित्वा कूलमानयन् ते
९ कूलाद् अतिदूरे नासन् द्विशतहस्तेभ्यो दूर आसन् इत्यनुमीयते। तदन-
न्तरं तेषु तीर उत्थितेषु तत्स्थाने प्रज्वलिताग्निं तस्य निकटे मत्स्यान्
१० पूपांश्च तेऽपश्यन्। ततो यीशुरकथयद् यान् मत्स्यान् अधरत तेषां कियत
११ आनयत। अतः शिमोन् पितरः परावृत्य गत्वा बृहद्भिस्त्रिपञ्चाशदधिक-
शतमत्स्यैः परिपूर्णं तज्जालम् आकृष्य उदतोलयत् किन्त्वेतावद्भि र्मत्स्यै-
१२ रपि जालं नाछिद्यत। अनन्तरं यीशुस्तान् अवादीत् यूयमागत्य भोजनं
कुरुध्वं तदा स एव प्रभुरिति ज्ञातत्वात् त्वं कः? इति प्रष्टुं शिष्याणां कस्यापि
१३ साहसं नाभवत्। ततो यीशुरागत्य पूपान् मत्स्यांश्च गृहीत्वा तेभ्यः
१४ पर्य्यवेषयत्। इत्थं श्मशानादुत्थानात् परं यीशुः शिष्येभ्यस्तृतीयवारं दर्शनं
दत्तवान्।

१५ भोजने समाप्ते सति यीशुः शिमोन् पितरं पृष्टवान् हे यूनसः पुत्र
शिमोन् त्वं किम् एतेभ्योधिकं मयि प्रीयसे? ततः स उदितवान् सत्यं प्रभो
त्वयि प्रीयेऽहं तद् भवान् जानाति; तदा यीशुरकथयत् तर्हि मम मेष-
१६ शावकगणं पालय। ततः स द्वितीयवारं पृष्टवान् हे यूनसः पुत्र शिमोन्
त्वं किं मयि प्रीयसे? ततः स उक्तवान् सत्यं प्रभो त्वयि प्रीयेऽहं तद् भवान्
१७ जानाति; तदा यीशुरकथयत् तर्हि मम मेषगणं पालय। पश्चात् स
तृतीयवारं पृष्टवान् हे यूनसः पुत्र शिमोन् त्वं किं मयि प्रीयसे?
एतद्वाक्यं तृतीयवारं पृष्टं तस्मात् पितरो दुःखितो भूत्वाऽकथयत्
हे प्रभो भवतोऽगोचरं नास्ति किमपि त्वय्यहं प्रीये तद् भवान्
१८ जानाति; ततो यीशुरवदत् तर्हि मम मेषगणं पालय। अहं तुभ्यं यथार्थं
कथयामि यौवनकाले स्वयं बद्धकटि र्यत्रेच्छा तत्र यातवान् किन्त्वितः
परं वृद्धे वयसि हस्तं विस्तारयिष्यसि अन्यजनस्त्वां बद्ध्वा यत्र गन्तुं
१९ तवेच्छा न भवति त्वां धृत्वा तत्र नेष्यति। फलतः कीदृशेन मरणेन स

ईश्वरस्य महिमानं प्रकाशयिष्यति तद् बोधयितुं स इति वाक्यं प्रोक्तवान्।
इत्युक्ते सति स तमवोचत् मम पश्चाद् आगच्छ।

यो जनो रात्रिकाले यीशो र्वक्षोऽवलम्ब्य हे प्रभो को भवन्तं २०
परकरेषु समर्पयिष्यतीति वाक्यं पृष्टवान्; तं यीशोः प्रियतमशिष्यं पश्चाद् २१
आगच्छन्तं पितरो मुखं परावर्त्य विलोक्य यीशुं पृष्टवान्; हे प्रभो एतस्य २२
मानवस्य कीदृशी गति र्भविष्यति? तदा स प्रत्यवदत्, मम पुनरागमनपर्य्यन्तं
यदि तं स्थापयितुम् इच्छामि तत्र तव किं? त्वं मम पश्चाद् आगच्छ।
तस्मात् स शिष्यो न मरिष्यतीति भ्रातृगणमध्ये किंवदन्ती जाता किन्तु स २३
न मरिष्यतीति वाक्यं यीशु र्नावदत् केवलं मम पुनरागमनपर्य्यन्तं यदि
तं स्थापयितुम् इच्छामि तत्र तव किं? इति वाक्यम् उक्तवान्।

यो जन एतानि सर्व्वाणि लिखितवान् अत्र साक्ष्यञ्च दत्तवान् सएव २४
स शिष्यः, तस्य साक्ष्यं प्रमाणमिति वयं जानीमः। यीशुरेतेभ्योऽ- २५
पराण्यपि बहूनि कर्म्माणि कृतवान् तानि सर्व्वाणि यद्येकैकं कृत्वा
लिख्यन्ते तर्हि ग्रन्था एतावन्तो भवन्ति तेषां धारणे पृथिव्यां स्थानं न
भवति। इति॥

# प्रेरितानां कर्म्मणामाख्यानं।

## १ प्रथमोऽध्यायः।

१ शिष्येभ्यो यीशो र्दर्शनदानम् आज्ञापनं तस्य स्वर्गारोहणञ्च १२ शिष्याणां यिरूशा-लमागमनं प्रार्थनायां प्रवर्त्तनं १५ यिहूदाविनिमयेन मतथीनियोजनञ्च।

१ हे थियफिल यीशुः स्वमनोनीतान् प्रेरितान् पवित्रेणात्मना समा-
२ दिश्य यस्मिन् दिने स्वर्गमारोहत् तद्दिनपर्य्यन्तं यां यां क्रियामकरोत्
३ यद्यद् उपादिशच्च तानि सर्व्वाणि पूर्व्वम् अलिखम्। स स्वनिधनदुःख-
भोगात् परम् अनेकप्रत्यक्षप्रमाणैः स्वं सजीवं दर्शयित्वा चत्वारिंशद्दिनानि
यावत् तेभ्यः प्रेरितेभ्यो दर्शनं दत्त्वा ईश्वरीयराज्यस्य वर्णनम् अकरोत्।
४ अनन्तरं तेषां सभां कृत्वा इत्याज्ञापयत् यूयं यिरूशालमोऽन्यत्र गमनमकृत्वा
यस्मिन् पित्राङ्गीकृते मम वदनात् कथा अश्रृणुत तत्प्राप्तिम् अपेक्ष्य तिष्ठत।
५ योहन् जले मज्जितवान् किन्त्वल्पदिनमध्ये यूयं पवित्र आत्मनि मज्जिता
६ भविष्यथ। पश्चात् ते सर्व्वे मिलित्वा तम् अपृच्छन् हे प्रभो भवान् किमि-
७ दानीं पुनरपि राज्यम् इस्रायेलीयलोकानां करेषु समर्पयिष्यति? ततः
सोवदत् यान् सर्व्वान् कालान् समयांश्च पिता स्ववशेऽस्थापयत् तान् ज्ञातुं
८ युष्माकम् अधिकारो न जायते। किन्तु युष्मासु पवित्रस्यात्मन आवि-
र्भावे सति यूयं शक्तिं प्राप्य यिरूशालम् समस्तयिहूदाशोमिरोण-
देशेषु पृथिव्याः सीमां यावद् यावन्तो देशास्तेषु सर्व्वेषु च मयि साक्ष्यं
९ दास्यथ। इति वाक्यमुक्त्वा स तेषां समक्षं स्वर्गं नीतोऽभवत् ततो मेघमा-
१० रुह्य तेषां दृष्टेरगोचरोऽभवत्। यस्मिन् समये ते विहायसं प्रत्यनन्यदृष्ट्या
तस्य तादृशम् ऊर्द्ध्वगमनम् अपश्यन् तस्मिन्नेव समये परिहितशुक्लवस्त्रौ
११ द्वौ जनौ तेषां सन्निधौ दण्डायमानौ कथितवन्तौ; हे गालीलीय-
लोका यूयं किमर्थं गगणं प्रति दृष्टिं कृत्वा दण्डायमानास्तिष्ठथ? युष्माकं

समीपात् स्वर्गं नीतो यो यीशुस्तं यूयं यथा स्वर्गम् आरोहन्तम् अदर्शत
तथा स पुनश्चागमिष्यति।

ततः परं ते जैतुननाम्नः पर्व्वताद् विश्रामवारस्य पन्था, अर्थात् प्राये- १२
णार्द्धक्रोशो यद् यिरूशालम् नगरं तत्र परावृत्यागच्छन्। तदनन्तरं नगरं १३
प्रविश्य पितरो याकुब् योहन् आन्द्रियः फिलिपः थोमा बर्थलमी मथी
आल्फीयपुत्रो याकुब् उद्योगी शिमोन् याकुबो भ्राता यिहूदा एते सर्व्वे
यत्र स्थाने वसन्ति तस्मिन् उपरितनप्रकोष्ठे प्रवेशम् अकुर्व्वन्। पश्चाद् १४
इमाः कियत्यः स्त्रियश्च यीशो र्माता मरियम् तस्य भ्रातरश्चैते सर्व्वे
एकचित्तीभूय सततं विनयेन प्रार्थयन्त।

तस्मिन् समये तत्र स्थाने साकल्येन विंशत्यधिकशतं शिष्या आसन्। १५
ततः पितरस्तेषां मध्ये तिष्ठन् उक्तवान् हे भ्रातृगण यीशुं प्रत्या- १६
क्रामिणां लोकानां पथदर्शको यो यिहूदास्तस्मिन् दायूदा पवित्र
आत्मा यां कथां कथयामास तस्याः प्रत्यक्षीभवनस्यावश्यकत्वम् आसीत्।
स जनोस्माकं मध्यवर्त्ती सन् अस्याः सेवाया अंशम् अलभत। तदनन्तरं १७
कुकर्म्मणा लब्धं यन्मूल्यं तेन क्षेत्रमेकं क्रीतम् अपरं तस्मिन् अधोमुखे भृमौ १८
पतिते सति तस्योदरस्य विदीर्णत्वात् सर्व्वा नाड्यो निरगच्छन्। एतां १९
कथां यिरूशालम्निवासिनः सर्व्वे लोका विदन्ति ; अपरञ्च तेषां निज-
भाषया तत्क्षेत्रं हकल्दामा, अर्थात् रक्तक्षेत्रमिति विख्यातमास्ते। पुनश्च २०

'निकेतनं तदीयन्तु शून्यमेव भविष्यति।
तस्य दूष्ये निवासार्थं कोपि स्थास्यति नैव हि।
अन्यच्च। अन्यएव जनस्तस्य पदं संप्राप्स्यति ध्रुवं।'

इत्थं गीतपुस्तके लिखितमास्ते। अतो योहनो मज्जनम् आरभ्यास्माकं २१
समीपात् प्रभो र्यीशोः स्वर्गारोहणदिनं यावत् सोस्माकं मध्ये यावन्ति
दिनानि यापितवान् तावन्ति दिनानि ये मानवा अस्माभिः सार्द्धं २२
तिष्ठन्ति यीशोरुत्थानेऽस्माभिः साकं साक्षीभवनार्थम् एतेषाम् एकजनस्य
प्रयोजनम् आस्ते। अतो यस्य रूढि र्यस्तो यं बर्शब्बेत्युक्त्वाह्वयन्ति स युषफ् २३

२४ मतथीश्च द्वावेतौ पृथक् कृत्वा त ईश्वरस्य सन्निधौ प्रार्थ्य कथितवन्तः हे सर्व्वा-
न्तर्यामिन् परमेश्वर यिहूदाः सेवनप्रेरितत्वपदच्युतः सन् निजस्थानम्
२५ अगच्छत्; तत्पदं लब्धुम् एनयो र्जनयो र्मध्ये भवान् कं मनोनीतम् अकार्षीत्
२६ तमस्मान् दर्शयतु। ततो गुटिकापाते कृते मतथीनाम्ना गुटिका उदतिष्ठत्
तस्मात् सोन्येषाम् एकादशानां प्रेरितानां मध्ये गणितोभवत्।

---

## २ द्वितीयोध्यायः।

१ पवित्रस्यात्मन आविर्भावः ५ तेन प्रेरितानां नानाभाषाकथनं ततो लोकाना-
माश्चर्य्यमननं १४ पितरस्योपदेशवाक्यं ३७ तेन वाक्येन बहुलोकानां मनः
परावृत्तिः ४१ तेषां मज्जनं सदाचरणञ्च।

१ 　अपरञ्च निस्तारोत्सवस्य पञ्चाशत्तमे दिने समुपस्थिते सति ते सर्व्वे
२ एकचित्तीभूय स्थान एकस्मिन् मिलिता आसन्। एतस्मिन्नेव समये ऽक-
स्माद् आकाशात् प्रचण्डात्युग्रवायोः शब्दवद् एकः शब्द आगत्य यस्मिन्
३ गृहे त उपाविशन् तद्गृहं समस्तं व्याप्नोत्। ततः परं वह्निस्वरूपा द्विखण्ड-
४ जिह्वा प्रत्यक्षीभूय प्रतिजनोर्द्ध्वं स्थगिताभूत्। तस्मात् सर्व्वे पवित्रेणात्मना
परिपूर्णाः सन्त आत्मा यथा वाचितवान् तदनुसारेणान्यदेशीयानां भाषा
उक्तवन्तः।

५ 　तस्मिन् समये पृथिवीस्थसर्व्वदेशेभ्यो यिहूदीयमतावलम्बिनो भक्त-
६ लोका यिरूशालमि न्यवसन्; तस्याः कथायाः किंवदन्त्या जातत्वात् सर्व्वे
लोका मिलित्वा निजनिजभाषया शिष्याणां कथाकथनं श्रुत्वा समु-
७ द्विग्ना अभवन्। अपरञ्च सर्व्व एव विस्मयापन्ना आश्चर्य्यान्विताश्च सन्तः
परस्परं उक्तवन्तः पश्यत ये कथां कथयन्ति ते सर्व्वे गालीलीयलोकाः
८ किं न भवन्ति? तर्हि वयं प्रत्येकशः स्वस्वजन्मदेशीयभाषाभिः कथा
९ एतेषां शृणुमः किमिदं? पारथी-मादी-अरामनहरयिम्-देशनिवा-
सिनो यिहूदीया कापदकीया पन्त आशीया फ्रुगीया पाम्फुलीया
१० मिसर्निवासिनः; कुरीणीनिकटवर्त्तिलूबीयप्रदेशनिवासिनो रोमनगराद्
आगता यिहूदीयलोका यिहूदीयमतग्राहिणः क्रीतीया अराबीयादयो
११ लोकाश्च ये वयम् अस्माकं निजनिजभाषाभिरेतेषाम् ईश्वरीयमहाकर्म्म-

व्याख्यानं शृणुमः। इत्थं ते सर्व्वएव विस्मयापन्नाः सन्दिग्धचित्ताः सन्तः १२
परस्परमूचुः, अस्य को भावः? अपरे केचित् परिहस्य कथितवन्त एते १३
नवीनद्राक्षारसेन मत्ता अभवन्।

तदा पितर एकादशभि र्जनैः साकं तिष्ठन् तान्लोकान् उच्चैःकारम् १४
अवदत् हे यिहूदीया हे यिरूशालमनिवासिनः सर्व्वे अवधानं कृत्वा
मदीयवाक्यं बुध्यध्वं। इदानीम् एकयामाद् अधिका वेला नास्ति तस्माद् १५
यूयं यद् अनुमाथ मानवा इमे मद्यपानेन मत्तास्तन्न किन्तु योयेल् १६
भविष्यद्वक्त्रैतद्वाक्यमुक्तं यथा

१७ 'ईश्वरः कथयामास युगान्तसमये त्वहम्।
वर्षिष्यामि स्वमात्मानं सर्व्वप्राण्युपरि ध्रुवम्।
भाविवाक्यं वदिष्यन्ति कन्याः पुत्राश्च वस्तुतः।
प्रत्यादेशञ्च प्राप्स्यन्ति युष्माकं युवमानवाः।
तथा प्राचीनलोकास्तु स्वप्नान् द्रक्ष्यन्ति निश्चितम्।
१८ वर्षिष्यामि तदात्मानं दासदासीजनोपरि।
तेनैव भाविवाक्यं ते वदिष्यन्ति हि सर्व्वशः।
१९ ऊर्द्ध्वस्थे गगणे चैव नीचस्थे पृथिवीतले।
शोणितानि च वह्नींश्च घनधूमादिकानि च।
चिह्नानि दर्शयिष्यामि महाश्चर्य्यक्रियास्तथा।
२० महाभयानकस्यैव तद्दिनस्य परेशितुः।
पुरागमाद् रविः कृष्णो रक्तश्चन्द्रो भविष्यतः।
२१ किन्तु यः परमेशस्य नाम्नि सम्प्रार्थयिष्यते।
सएव मनुजो नूनं परित्रातो भविष्यति।'

अतो हे इस्रायेल्वंशीयलोकाः सर्व्वे कथायामेतस्याम् मनो निधत्त २२
नासिरीयो यीशुरीश्वरस्य मनोनीतः पुमान् एतद् ईश्वरस्तेनैव
कृताश्चर्य्याद्भुतकर्म्मभि र्लक्षणैश्च युष्माकं साक्षादेव प्रतिपादितवान् इति यूयं
जानीथ। तस्मिन् योशौ ईश्वरनिश्चितमन्त्रणापूर्व्वनिरूपणानुसारेण २३
मृत्यौ समर्पिते सति यूयं तं धृत्वा दुष्टलोकानां हस्तैः क्रुशे विधित्वाहत।

२४ किन्त्वीश्वरस्तं निधनस्य बन्धनान्मोचयित्वा उदस्थापयत् यतः स मृत्युना
२५ बद्धस्तिष्ठतीति न सम्भवति। एतस्मिन् दायूदपि कथितवान् यथा

'सर्व्वदा मम साक्षात्तं स्थापये परमेश्वरं।
स्थिते मद्दक्षिणे तस्मिन् स्खलिष्यामि त्वहं नहि।
२६ आनन्दिष्यति तद्धेतो र्मदीयन्तु मनस्तु वै।
आह्लादिष्यति जिह्वापि मदीयात्तु तथैव च।
प्रत्याशया शरीरन्तु मदीयं वै शयिष्यते।
२७ परलोके यतोहेतोस्त्वं मां नैव हि त्यक्ष्यसि।
स्वकीयं पुण्यवन्तं त्वं क्षयितुं नैव दास्यसि।
२८ एवं जीवनमार्गं त्वं मामेव दर्शयिष्यसि।
स्वसंमुखे य आनन्दो दक्षिणे स्वस्य यत् सुखं।
अनन्तं तेन मां पूर्णं करिष्यसि न संशयः।'

२९ हे भ्रातरस्तस्य पूर्व्वपुरुषस्य दायूदः कथां स्पष्टं कथयितुं माम् अनु-
मन्यध्वं स प्राणान् त्यक्त्वा श्मशाने स्थापितोभवद् अद्यापि तत् श्मशानम्
३० अस्माकं सन्निधौ विद्यते ; फलतो लौकिकभावेन दायूदो वंशे ख्रीष्टं जन्म
ग्राहयित्वा तस्यैव सिंहासने समुपवेष्टुं तमुत्थापयिष्यति परमेश्वरः शपथं
३१ कृत्वा दायूदः समीप इमम् अङ्गीकारं कृतवान् ; दायूद् भविष्यद्वादी सन्
इदं ज्ञातवान् पूर्व्वमिदं ज्ञात्वा ख्रीष्टोत्थाने कथामिमां कथयामास यथा
३२ तस्यात्मा परलोके न त्यक्ष्यते तस्य शरीरञ्च न क्षेष्यति ; अतः परमेश्वर एनं
३३ यीशुं श्मशानाद् उदस्थापयत् तत्र वयं सर्व्वे साक्षिण आस्महे। स ईश्व-
रस्य दक्षिणकरेणोन्नतिं प्राप्य पवित्र आत्मनि पिता यमङ्गीकारं कृतवान
३४ तस्य फलं प्राप्य यत् पश्यथ शृणुथ च तदवर्षत्। यतो दायूद् स्वर्गं
नारुरोह किन्तु स्वयम् इमां कथाम् अकथयद् यथा

३५ 'मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
तव शत्रूनहं यावत् पादपीठं करोमि न।
तावत् कालं मदीये त्वं दक्षपार्श्वे उपाविश।'

अतो यं यीशुं यूयं क्रुशेऽहत परमेश्वरस्तं प्रभुत्वाभिषिक्तत्वपदे न्ययुंक्त ३६
इति इस्रायेलीया लोका निश्चितं जानन्तु।

एतादृशीं कथां श्रुत्वा तेषां हृदयानां विदीर्णत्वात् ते पितराय ३७
तदन्यप्रेरितेभ्यश्च कथितवन्तः, हे भ्रातृगण वयं किं करिष्यामः? ततः ३८
पितरः प्रत्यवदद् यूयं सर्व्वे स्वं स्वं मनः परिवर्त्तयध्वं तथा पापमोचनार्थं
यीशुख्रीष्टस्य नाम्ना मज्जिता भवत तथा सति दानरूपं पवित्रम् आत्मानं
लप्स्यथ। यतो युष्माकं, युष्माकं सन्तानानाञ्च दूरस्थसर्व्वलोकानाञ्च ३९
निमित्तम् अर्थाद् अस्माकं प्रभुः परमेश्वरो यावतो लोकान् आह्वास्यति
तेषां सर्व्वेषां निमित्तम् अयमङ्गीकार आस्ते। एतदन्याभि र्बहुकथाभिः ४०
प्रमाणं दत्त्वाकथयत्, एतेभ्यो विपथगामिभ्यो वर्त्तमानलोकेभ्यः स्वान् रक्षत।

ततः परं ये सानन्दास्तां कथाम् अगृह्णन् ते मज्जिताश्चाभवन्। ४१
तस्मिन् दिवसे प्रायेण त्रीणि सहस्राणि लोकास्तेषां सपक्षाः सन्तः प्रेरिता- ४२
नाम् उपदेशे सङ्गतौ पूपभञ्जने प्रार्थनासु च मनःसंयोगं कृत्वातिष्ठन्।
अपरञ्च प्रेरितै र्नानाप्रकारलक्षणेषु महाश्चर्य्यकर्म्मसु च दर्शितेषु लोक- ४३
मात्रस्य भयमुपस्थितं। तथा विश्वासकारिणः सर्व्वे सह तिष्ठन्तः स्वेषां ४४
सर्व्वाः सम्पत्तीः साधारण्येन स्थापयित्वाभुञ्जत; फलतो गृहान् द्रव्याणि ४५
च सर्व्वाणि विक्रीय सर्व्वेषां स्वस्वप्रयोजनानुसारेण विभज्य सर्व्वेभ्योऽददन्।
अपरञ्च सर्व्वे एकचित्तीभूय दिने दिने मन्दिरे संतिष्ठन्तस्तथा गृहे ४६
गृहे पूपान् भञ्जन्त ईश्वरस्य धन्यवादं कुर्व्वन्तो लोकैः समादृताः परमा-
नन्देन सरलान्तःकरणेन भोजनं पानञ्च कृतवन्तः। अपरञ्च परमेश्वरो ४७
दिने दिने परित्राणभाजनै र्मण्डलीम् अवर्द्धयत्।

---

## ३ तृतीयोऽध्यायः।

१ पितरेण खञ्जस्य स्वास्थ्यं १२ मनः परावर्त्तनाय पितरस्योपदेशकथा च।

अपरञ्च तृतीययामवेलायां सत्यां प्रार्थनायाः समये पितरयोहनौ १
सम्भूय मन्दिरं गच्छतः। तस्मिन्नेव समये मन्दिरप्रवेशकानां समीपे २

भिक्षाकरणार्थं यं जन्मखञ्जमानुषं लोका मन्दिरस्य सुन्दरनाम्नि द्वारे
३ प्रतिदिनम् अस्थापयन् तं वहन्तस्तद्द्वारं आनयन्। तदा पितरयोहनौ
४ मन्दिरं प्रवेष्टुम् उद्यतौ विलोक्य स खञ्जस्तौ किञ्चिद् भिक्षितवान्। तस्माद्
योहना सहितः पितरस्तम् अनन्यदृष्ट्या निरीक्ष्य प्रोक्तवान् आवां प्रति
५ दृष्टिं कुरु। ततः स किञ्चित् प्राप्त्याशया तौ प्रति दृष्टिं कृतवान्।
६ तदा पितरो गदितवान् मम निकटे स्वर्णरूप्यादि किमपि नास्ति किन्तु
यदास्ते तद् ददामि नासरीयस्य यीशुख्रीष्टस्य नाम्ना त्वमुत्थाय गमना-
७ गमने कुरु। ततः परं स तस्य दक्षिणकरं धृत्वा तम् उदतोलयत्; तेन
तत्क्षणात् तस्य जनस्य पादगुल्फयोः सबलत्वात् स उल्लम्फ्य प्रोत्थाय गमना-
८ गमने ऽकरोत्। ततो गमनागमने कुर्व्वन् उल्लम्फन् ईश्वरं धन्यं वदन्
९ ताभ्यां सार्द्धं मन्दिरम् अविशत्। ततः सर्व्वे लोकास्तं गमनागमने
१० कुर्व्वन्तम् ईश्वरं धन्यं वदन्तञ्च विलोक्य, मन्दिरस्य सुन्दरे द्वारे य
उपविश्य भिक्षितवान् सएवायम् इति ज्ञात्वा तं प्रति तस्या घटनायाः
११ चमत्कृता विस्मयापन्नाश्चाभवन्। अपरञ्च यः खञ्जः स्वस्थोभवत् तेन
पितरयोहनोः करयोर्धृतयोः सतोः सर्व्वे लोका असम्भवं मन्यमाना सुले-
मानोऽट्टालिकाग्रभागं धावन्तस्तेषां सन्निधिम् आगच्छन्।
१२ तद् दृष्ट्वा पितरस्तेभ्योऽकथयत् हे इस्रायेलीयलोकाः यूयं कुतो
ऽनेनाश्चर्य्यं मन्यध्वे, आवां निजशक्त्या यद्वा निजपुण्येन खञ्जमनुष्यमेनं
१३ गमितवन्ताविति चिन्तयित्वा आवां प्रति कुतोऽनन्यदृष्टिं कृत्वा स्थ? यं यीशुं
यूयं परकरेषु समार्पयत ततो यं पीलातो मोचयितुम् ऐच्छत् तथापि यूयं
तस्य साक्षात् नाङ्गीकृतवन्त इब्राहीम इस्हाको याकुबश्चेश्वरोऽर्थाद्
अस्माकं पूर्व्वपुरुषाणाम् ईश्वरः स्वपुत्रस्य तस्य यीशो र्महिमानं प्राकाश-
१४ यत्। किन्तु यूयं तं पवित्रं धार्म्मिकं पुमांसं नाङ्गीकृत्य हत्याकारिणमेकं
१५ स्वेभ्यो दातुम् अयाचध्वं। पश्चात् तं जीवनस्याधिपतिम् अहत किन्त्वीश्वरः
१६ श्मशानात् तम् उदस्थापयन् तत्र वयं साक्षिण आस्महे। इमं यं मानुषं
यूयं पश्यथ परिचिनुथ च स तस्य नाम्नि विश्वासकरणात् चलनशक्तिं

लब्धवान् तस्मिन् तस्य यो विश्वासः स युष्माकं सर्व्वेषां साक्षात् सम्पूर्ण-
रूपेण स्वस्थम् अकार्षीत्। हे भ्रातरो यूयं युष्माकम् अधिपतयश्च १७
अज्ञात्वा कर्म्माण्येतानि कृतवन्त इदानीं ममैष बोधो जायते। किन्त्वी- १८
श्वरः ख्रीष्टस्य दुःखभोगे भविष्यद्वादिनां मुखेभ्यो यां यां कथां पूर्व्वमकथ-
यत् ताः कथा इत्थं सिद्धा अकरोत्। अतः स्वेषां पापमोचनार्थं खेदं कृत्वा १९
मनांसि परिवर्त्तयध्वं तस्माद् ईश्वरात् सान्त्वनाप्राप्तेः समय उपस्थास्यति
पुनश्च पूर्व्वकालम् आरभ्य प्रचारितो यो यीशुख्रीष्टस्तम् ईश्वरो युष्मान् २०
प्रति प्रेषयिष्यति। किन्तु जगतः सृष्टिमारभ्य ईश्वरो निजपवित्रभविष्य- २१
द्वादिगणेन यथा कथितवान् तदनुसारेण सर्व्वेषां कार्य्याणां सिद्धिपर्य्यन्तं
तेन स्वर्गे वासः कर्त्तव्यः। 'युष्माकं प्रभुः परमेश्वरो युष्माकं भ्रातृगणस्य मध्ये २२
मादृशमेकस्य भविष्यद्वादिन उदयं करिष्यति ततः स यत् किञ्चित् कथ-
यिष्यति तत्र यूयं मनांसि निधास्यथ। किन्तु यः कश्चित् प्राणी तस्य भवि- २३
ष्यद्वादिनःकथां न ग्रहीष्यति स निजलोकानां मध्याद् उच्छेत्स्यते भविष्यति,'
इमां कथाम् अस्माकं पूर्व्वपुरुषेभ्यः केवलो मुसाः कथयामास इति नहि २४
शिमूयेल् भविष्यद्वादिनम् आरभ्य यावन्तो भविष्यद्वादिनो भविष्यद्वाक्यम्
अकथयन् ते सर्व्वएव समयस्यैतस्य कथाम् अकथयन्। यूयमपि तेषां २५
भविष्यद्वादिनां सन्तानाः, अपरञ्च तव वंशोद्भवपुंसा सर्व्वदेशीया लोका
आशिषं प्राप्ता भविष्यन्ति इब्राहीमे कथामेतां कथयित्वा ईश्वरोऽस्माकं
पूर्व्वपुरुषैः सहितो यं नियमं स्थिरीकृतवान् तस्य नियमस्याधिकारि-
णोऽपि यूयं भवथ। अत ईश्वरो निजपुत्रं यीशुम् उत्थाप्य युष्माकं सर्व्वेषां २६
स्वस्वपापात् परावर्त्त्य युष्मभ्यम् आशिषं दातुं प्रथमतस्तं युष्माकं निकटं
प्रेषितवान्।

## ४ चतुर्थोऽध्यायः ।

१ पितरस्योपदेशेन महायाजकानां क्रोधः पितरयोहनोः कारायां स्थापनं ५ पितरे योहनि च राजविचारः पितरस्योत्तरं १३ पितरयोहनौ प्रति खीष्टनामप्रचारनिषेधनं २३ तयो र्मण्डल्यागमनं प्रार्थनं ३२ प्रार्थनया पवित्रात्मप्राप्तिः शिष्याणामेकत्वं धनविभागश्च ।

१ यस्मिन् समये पितरयोहनौ लोकान् उपदिशतस्तस्मिन् समये याजका
२ मन्दिरस्य सेनापतयः सिदूकीगणश्च तयोर् उपदेशकरणे खीष्टस्योत्थानम्
उपलक्ष्य सर्व्वेषां मृतानाम् उत्थानप्रस्तावे च व्यग्राः सन्तस्तावाक्रामन् ।
३ तान् धृत्वा दिनावसानकारणात् परदिनपर्य्यन्तं रुद्ध्वा स्थापितवन्तः ।
४ तथापि ये ये लोकास्तयोरुपदेशम् अशृण्वन् तेषां प्रायेण पञ्च सहस्राणि
जना व्यश्वसन् ।
५ परेऽहनि अधिपतयः प्राचीना अध्यापकाश्च हनान्नामा महायाजकः
६ कियफा योहन् सिकन्दर इत्यादयो महायाजकस्य ज्ञातयः सर्व्वे यिरू-
७ शालम्नगरे मिलिताः । अनन्तरं प्रेरितान् मध्ये स्थापयित्वापृच्छन्
८ यूयं कया शक्त्या वा केन नाम्ना कर्म्माण्येतानि कुरुथ ? तदा पितरः पवि-
त्रेणात्मना परिपूर्णः सन् प्रत्यवादीद् हे लोकानाम् अधिपतिगण हे
९ इस्रायेलीयप्राचीना एतस्य दुर्ब्बलमानुषस्य हितं यत् कर्म्माक्रियत, अर्थात्
स येन प्रकारेण स्वस्थोभवत् तच् चेद् अद्यास्मान् पृच्छथ तर्हि सर्व्वे इस्रा-
१० येलीयलोका यूयं जानीत नासरीयो यो यीशुख्रीष्टः क्रुशे युष्माभिर-
विध्यत यश्चेश्वरेण श्मशानाद् उत्थापितः, तस्य नाम्ना जनोयं स्वस्थः सन्
११ युष्माकं सम्मुखे प्रोत्तिष्ठति । निचेतृभि र्युष्माभिरयं यः प्रस्तरो ऽवज्ञातो-
१२ ऽभवत् स प्रधानकोणस्य प्रस्तरो ऽभवत् । तद्भिन्नादपरात् कस्मादपि परित्राणं
भवितुं न शक्नोति येन त्राणं प्राप्येत भूमण्डलस्यलोकानां मध्ये तादृशं
किमपि नाम नास्ति ।
१३ तदा पितरयोहनोरेतादृशं साहसं दृष्ट्वा ताववि‌द्वांसौ नीचलोकाव्
इति बुद्ध्वा आश्चर्य्यम् अमन्यन्त तथा तौ यीशोः सङ्गिनौ जाताविति ज्ञातुं
१४ शक्ताः । किन्तु ताभ्यां सार्द्धं तं स्वस्थमानुषं तिष्ठन्तं दृष्ट्वा ते कामप्यपराम्

आपत्तिं कर्त्तुं नाशक्नुवन्। तदनन्तरं ते सभातः स्थानान्तरं गन्तुं तान् १५
आज्ञाप्य स्वयं परस्परम् इति मन्त्रणामकुर्व्वन् तौ मानवौ वयं किं
कुर्म्मः? ताववेकं प्रसिद्धम् आश्चर्य्यं कर्म्म कृतवन्तौ तद् यिरूशालम्निवा- १६
सिनां सर्व्वेषां लोकानां समीपे प्राकाशत तदपह्नोतुं न शक्नुमः। किन्तु १७
लोकानां मध्यम् एतद् यथा न व्याप्नोति तदर्थं तौ भयं प्रदर्श्य तेन नाम्ना
कमपि मनुष्यं नोपदिशतम् इति दृढं निषेधामः। तदनन्तरं प्रेरितावाहूय १८
एतदाज्ञापयन् इतःपरं यीशो र्नाम्ना कदापि कामपि कथां मा कथयतं
किमपि नोपदिशतञ्च। ततः पितरयोहनौ प्रत्यवदताम् ईश्वरस्याज्ञाग्रहणं १९
वा युष्माकम् आज्ञाग्रहणम् एतयोरुभयो र्मध्ये ईश्वरस्य गोचरे किं
विहितं यूयं तस्य विवेचनां कुरुत। वयं यद् अपश्याम यदशृणुम च तन्न २०
प्रचारयिष्याम एतत् कदापि भवितुं न शक्नोति। अपरञ्च यद्घटत २१
तद् दृष्ट्वा सर्व्वे लोका ईश्वरस्य गुणान् अन्ववदन् तस्मात् लोक-
भयात् तौ दण्डयितुं कमप्युपायं न प्राप्य ते पुनरपि तर्जयित्वा तावत्य-
जन्। यस्य मानुषस्यैतत् स्वास्थ्यकरणम् आश्चर्य्यं कर्म्माक्रियत तस्य वयः २२
चत्वारिंशद्वत्सरा व्यतीताः।

ततः परं तौ विसृष्टौ सन्तौ स्वसङ्गिनां सन्निधिं गत्वा प्रधानयाजकैः २३
प्राचीनलोकैश्च प्रोक्ताः सर्व्वाः कथा ज्ञापितवन्तौ। तच्छ्रुत्वा सर्व्व एक- २४
चित्तीभूय ईश्वरमुद्दिश्य प्रोच्चैरेतत् प्रार्थयन्त हे प्रभो गगणपृथिवी-
पयोधीनां तेषु च यद्यद् आस्ते तेषां स्रष्टेश्वरस्त्वं। त्वं निजसेवकेन दायूदा २५
वाक्यमिदम् उवाचिथ

'मनुष्या अन्यदेशीयाः कुर्व्वन्ति कलहं कुतः।
लोकाश्च वा किमर्थं वै चिन्तां कुर्व्वन्ति निष्फलां।
२६ परमेशस्य तेनैवाभिषिक्तस्य जनस्य च।
विरुद्धमभितिष्ठन्ति पृथिव्याः पतयः कुतः।'

फलतस्तव हस्तेन मन्त्रणया च पूर्व्वं यद्यत् स्थिरीकृतं तद् यथा सिद्धं २७
भवति तदर्थं त्वं यम् अभिषिक्तवान् स तव पवित्रो यीशुस्तस्य प्रातिकूल्येन

२८ हेरोद् पन्तियपिलात अन्यदेशीयलोका इस्रायेल्लोकाश्च सर्व्व एते
२९ सभायाम् अतिष्ठन्। हे परमेश्वर अधुना तेषां तर्जनं गर्जनञ्च शृणु तथा
३० स्वास्थ्यकरणकर्म्मणा तव बाहुबलप्रकाशपूर्व्वकं तव सेवकान् निर्भयेन तव
वाक्यं प्रचारयितुं तव पवित्रस्य यीशो नाम्ना आश्चर्य्यम् असम्भवञ्च कर्म्म
३१ कर्त्तुञ्चाज्ञापय। इत्थं प्रार्थनया यत्र स्थाने ते सभायाम् आसन् तत् स्थानं
प्राकम्पत; ततः सर्व्वे पवित्रेणात्मना परिपूर्णाः सन्त ईश्वरस्य कथां
साहसेन प्राचारयन्।

३२ अपरञ्च प्रत्ययकारिलोकसमूहा एकमनस एकचित्तीभूय स्थिताः। तेषां
कोपि निजसम्पत्तिं स्वीयां नाजानन् किन्तु तेषां सर्व्वा सम्पत्तिः साधारणेन
३३ स्थिता। अन्यच्च प्रेरिता महाशक्तिप्रकाशपूर्व्वकं प्रभो र्यीशोरुत्थाने साक्ष्यम्
३४ अददुः, तेषु सर्व्वेषु महानुग्रहोऽभवच्च। अपरञ्च तेषां मध्ये कस्यापि द्रव्य-
न्यूनता नाभवत् यतस्तेषां गृहभूम्याद्या याः सम्पत्तय आसन् ता विक्रीय
३५ तन्मूल्यमानीय प्रेरितानां चरणेषु तैः स्थापितं; ततः प्रत्येकशः प्रयोजनानु-
३६ सारेण दत्तमभवत्। विशेषतः कुप्रोपद्वीपीयो लेवीवंशजातो योसिनामक
एको जनो भूम्यधिकारी, यं प्रेरिता बर्णब्बा, अर्थात् सान्त्वनादायक
३७ इत्युक्त्वा समाह्वयन् स जनो निजभूमिं विक्रीय तन्मूल्यमानीय प्रेरितानां
चरणेषु स्थापितवान्।

---

५ पञ्चमोऽध्यायः।

१ धनविभागे कापट्यकरणाद् हनानियसफीरयोर्मरणं १२ प्रेरितानां महाश्चर्य्य-
कर्म्मकरणं १७ तेषां कारायां स्थापनं दिव्यदूतेन तेषां मोचनं महायाजकस्य
समीपे पितरस्योत्तरं ३३ तेनोत्तरेण सभास्थानां कोपित्वं गमिलीयेलमन्त्रणया
प्रेरितानां प्रहारेण विसर्जनञ्च।

१ तदा हनानियनामक एको जनो यस्य भार्य्याया नाम शफीरा स
२ स्वाधिकारं विक्रीय स्वभार्य्यां ज्ञापयित्वा तन्मूल्यस्यैकांशं संगोप्य स्थाप-
३ यित्वा तदन्यांशमात्रमानीय प्रेरितानां चरणेषु समर्पितवान्। तस्मात्
पितरोऽकथयत् हे हनानिय भूमे र्मूल्यं किञ्चित् संगोप्य स्थापयितुं

पवित्रस्यात्मनः सन्निधौ मृषावाक्यं कथयितुञ्च शैतान् कुतस्तवान्तःकरणे
प्रवृत्तिमजनयत्? सा भूमि र्यदा तव हस्तगता तदा किं तव स्वीया नासीत्? ४
विक्रीतायां सत्यां तन्मूल्ये किं तव स्वाधिकारो नासीत्? तर्हि स्वान्तः-
करणे कुत एतादृशी कुकल्पना त्वया कृता? त्वं केवलमानुषस्य निकटे
मृषावाक्यं नावादीः किन्त्वीश्वरस्य निकटेऽपि। एतां कथां श्रुत्वैव स ५
हनानियो भूमौ पतन् प्राणान् अत्यजत्, तद्वृत्तान्तं यावन्तो लोका
अशृण्वन् तेषां सर्व्वेषां महाभयम् अजायत। अनन्तरं युवलोकास्तं वस्त्रे- ६
णाच्छाद्य बहि र्नीत्वा श्मशानेऽस्थापयन्। ततः प्रहरैकानन्तरं किं वृत्तं ७
तन्नावगत्य तस्य भार्य्यापि तत्र स्थाने समुपस्थिता। ततः पितरस्ताम् ८
अपृच्छत् युवाभ्याम् एतावन्मुद्राभ्यो भूमि र्विक्रीता न वा? एतत्त्वं वद तदा
सा प्रत्यवादीत् सत्यम् एतावद्भ्यो मुद्राभ्य एव। ततः पितरोऽकथयत् युवां ९
कथं परमेश्वरस्यात्मानं परीक्षितुम् एकमन्त्रणावभवतां? पश्य ये तव पतिं
श्मशाने स्थापितवन्तस्ते द्वारस्य समीपे समुपतिष्ठन्ति त्वामपि बहि-
र्नेष्यन्ति। ततः सापि तस्य चरणसन्निधौ पतित्वा प्राणान् अत्याक्षीत्। १०
पश्चात् ते युवानोऽभ्यन्तरम् आगत्य तामपि मृतां दृष्ट्वा बहि र्नीत्वा तस्याः
पत्युः पार्श्वे श्मशाने स्थापितवन्तः। तस्मात् मण्डल्याः सर्व्वे लोका अन्य ११
लोकाश्च तां कथां श्रुत्वा सर्व्वे साध्वसं गताः।

ततः परं प्रेरितानां हस्तै र्लोकानां मध्ये बह्वाश्चर्य्याण्यद्भुतानि कर्म्माण्य- १२
क्रियन्त तदा शिष्याः सर्व्वे एकचित्तीभूय सुलेमानोऽट्टालिकाग्रभागे
सम्भूयासन्। तेषां सङ्गान्तर्गो भवितुं कस्यापि साहसं नाभवत् किन्तु १३
लोकास्तान् समाद्रियन्त। अपरं स्त्रियः पुरुषाश्च बहवो लोका विश्वस्य प्रभुं १४
शरणमापन्नाः। पितरस्य गमनागमनाभ्यां केनापि प्रकारेण तस्य छाया १५
कस्मिंश्चिज्जने लगिष्यतीत्याशया लोका रोगिणः शिविकया खट्वया
चानीय पथि पथि स्थापितवन्तः। चतुर्दिक्स्थनगरेभ्यो बहवो लोकाः १६
सम्भूय रोगिणोऽपवित्रभूतग्रस्तांश्च यिरूशालमम् आनयन् ततः सर्व्वे
स्वस्था अक्रियन्त।

१७ अनन्तरं महायाजकः सिदूकीनां मतग्राहिणस्तेषां सहचराश्च महा-
१८ क्रोधान्विताः सन्तः प्रेरितान् धृत्वा नीचलोकानां कारायां बद्धा स्थापित-
१९ वन्तः। किन्तु रात्रौ परमेश्वरस्य दूतः काराया द्वारं मोचयित्वा तान्
बहिरानीयाकथयद् यूयं गत्वा मन्दिरे दण्डायमानाः सन्तो लोकान्
२० प्रतीमां जीवनदायिकां सर्व्वां कथां प्रचारयत। इति श्रुत्वा ते प्रत्यूषे
२१ मन्दिर उपस्थाय उपदिष्टवन्तः। तदा सहचरगणेन सहितो महा-
याजक आगत्य मन्त्रिगणम् इस्रायेल्वंशस्य सर्व्वान् राजसभासदः सभास्थान्
२२ कृत्वा कारायास्तान् आनायितुं पदातिगणं प्रेषितवान्। ततस्ते गत्वा
२३ कारायां तान् अप्राप्य परावृत्यागत्य इति वार्त्ताम् अवादिषुः, वयं तत्र गत्वा
निर्व्विघ्नं काराया द्वारं रुद्धं रक्षकांश्च द्वारस्य बहिर्दण्डायमानान् अद-
२४ र्शाम सत्यं किन्तु द्वारं मोचयित्वा तन्मध्ये कमपि द्रष्टुं न प्राप्ताः। एतां
कथां श्रुत्वा महायाजको मन्दिरस्य सेनापतिः प्रधानयाजकाश्च, इतः परं
२५ किमपरं भविष्यतीति चिन्तयित्वा सन्दिग्धचित्ता अभवन्। एतस्मिन्नेव
समयेऽपर एको जन आगत्य वार्त्तामेताम् अवदत् पश्यत यूयं यान्
मानवान् कारायाम् अस्थापयत ते मन्दिरे तिष्ठन्तो लोकान् उप-
२६ दिशन्ति। तदा मन्दिरस्य सेनापतिः पदातिभिः सह तत्र गत्वा
चेल्लोकाः पाषाणान् निक्षिप्यास्मान् मारयन्तीति भिया विनात्याचारं
२७ तान् आनयत्। अपरं ते महासभाया मध्ये तान् अस्थापयन् ततः परं
महायाजकस्तान् अपृच्छत् अनेन नाम्ना समुपदेष्टुं वयं किं दृढं न निषे-
२८ धाम? तथापि पश्यत यूयं स्वेषां तेनोपदेशेन यिरूशालमं परिपूर्णं कृत्वा
२९ तस्य जनस्य रक्तपातजनितापराधम् अस्मान् प्रत्यानेतुं चेष्टध्वे। ततः पित-
रोन्यप्रेरिताश्च प्रत्यवदन् मानुषस्याज्ञाग्रहणाद् ईश्वरस्याज्ञाग्रहणम् अस्मा-
३० कमुचितम्। यं यीशुं यूयं क्रुशे वेधित्वाहत तम् अस्माकं पैतृक ईश्वर
३१ उत्थाप्य इस्रायेल्वंशानां मनःपरिवर्त्तनं पापक्षमाञ्च कर्त्तुं राजानं परि-
३२ त्रातारञ्च कृत्वा स्वदक्षिणपार्श्वे तस्योन्नतिम् अकरोत्। एतस्मिन् वयमपि

साक्षिण आस्मेह तत् केवलं नहि ईश्वर आज्ञाग्राहिभ्यो यं पवित्रम्
आत्मानं दत्तवान् सोपि साक्ष्यस्ति।
एतद्वाक्ये श्रुते तेषां हृदयानि विद्धान्यभवन् ततस्ते तान् हन्तुं मन्त्रित- ३३
वन्तः। एतस्मिन्नेव समये तत्सभास्थानां सर्व्वलोकानां मध्ये सुख्यातो ३४
गमिलीयेल्नामक एको जनो व्यवस्थापकः फिरूशीलोक उत्थाय
प्रेरितान् क्षणार्थं स्थानान्तरं गन्तुम् आदिश्य कथितवान् हे इस्रा- ३५
येल्वंशीयाः सर्व्वे यूयम् एतान् मानुषान् प्रति यत् कर्त्तुम् उद्यतास्तस्मिन्
सावधाना भवत; इतः पूर्व्वं थूदानामैको जन उपस्थाय स्वं कमपि महा- ३६
पुरुषम् अवदत् ततः प्रायेण चतुःशतलोकास्तस्य मतग्राहिणोभवन् पश्चात्
स हतोभवत् तस्याज्ञाग्राहिणो यावन्तो लोकास्ते सर्व्वे विकीर्णाः सन्तो
ऽकृतकार्य्या अभवन्। तस्माज्जनात् परं नामलेखनसमये गालीलीययिहूदा ३७
नामैको जन उपस्थाय बहूलोकान् स्वमतं ग्राहीतवान् ततः सोपि व्यनश्यत्
तस्याज्ञाग्राहिणो यावन्तो लोका आसन् ते सर्व्वे विकीर्णा अभवन्।
अधुना वदामि यूयम् एतान् मनुष्यान् प्रति किमपि न कृत्वा क्षान्ता ३८
भवत यतः एष संकल्प एतत् कर्म्म च यदि मनुष्यादभवत् तर्हि विफलं
भविष्यति यदीश्वरादभवत् तर्हि तस्यान्यथा कर्त्तुं न शक्ष्यथ वरम् ईश्वर- ३९
रोधका भविष्यथ। तदा तस्य मन्त्रणां स्वीकृत्य ते प्रेरितान् आहूय प्रहृत्य ४०
यीशो र्नाम्ना कामपि कथां कथयितुं निषिद्ध्य व्यसर्जन्। किन्तु तस्य ४१
नामार्थं लज्जाभोगं कर्त्तुं योग्यत्वेन ते गणिता इत्यत्र सानन्दाः सन्तः
सभास्थानां साक्षाद् अगच्छन्। ततः परं प्रतिदिनं मन्दिरे गृहे गृहे ४२
चाविश्राममम् उपदिश्य यीशुख्रीष्टस्य सुसंवादं प्रचारितवन्तः।

---

६ षष्ठोध्यायः।

१ दरिद्रगणार्थं सप्तसहकारिणां नियोजनं ५ तेषां सप्तानां मध्ये स्तिफानकथा ८ अविश्वासिभिः सह विवादे स्तिफानस्यापवादित्वं।

अपरञ्च तस्मिन् समये शिष्याणां बाहुल्यात् प्रात्यहिकदानस्य विश्रा- १
णनै र्भिन्नदेशीयानां विधवास्त्रीगण उपेक्षिते सति इब्रीयलोकैः सहान्य-
देशीयानां विवाद उपातिष्ठत्। तदा द्वादशप्रेरिताः सर्व्वान् शिष्यान् २

संगृह्याकथयम् ईश्वरस्य कथाप्रचारं परित्यज्य भोजनगवेषणम् अस्माकम्
३ उचितं नहि। अतो हे भ्रातृगण वयम् एतत्कर्म्मणो भारं येभ्यो दातुं
शक्नुम एतादृशान् सुख्यात्यापन्नान् पवित्रेणात्मना ज्ञानेन च पूर्णान् सप्त-
४ जनान् स्वेषां मध्ये मनोनीतान् कुरुत; किन्तु वयं प्रार्थनायां कथाप्रचार-
कर्म्मणि च नित्यप्रवृत्ताः स्थास्यामः।

५ एतस्यां कथायां सर्व्वे लोकाः सन्तुष्टाः सन्तः स्वेषां मध्यात् परमभक्तः
पवित्रेणात्मना परिपूर्णः स्तिफानः फिलिपः प्रखोरो निकानोर् तीमन्
६ पर्म्मिना यिहूदिमतग्राह्यन्तियखियानगरस्थ निकला एतान् सप्त जनान्
प्रेरितानां समक्षम् आनयन् ततस्ते प्रार्थनां कृत्वा तेषां शिरःसु हस्तान्
७ आर्पयन्। अपरञ्च ईश्वरस्य कथा देशं व्याप्नोत् विशेषतो यिरूशालमि
नगरे शिष्याणां संख्या प्रभूतरूपेणावर्द्धत याजकानां मध्येपि बहवः
ख्रीष्टमतग्राहिणोऽभवन्।

८ स्तिफानो विश्वासेन पराक्रमेण च परिपूर्णः सन् लोकानां मध्ये बहु-
९ विधम् अद्भुतम् आश्चर्य्यं कर्म्माकरोत्। तेन लिबर्त्तिनीयनाम्ना विख्यात-
संघस्य कतिपयजनाः कुरीणीय सिकन्दरीय किलिकीयाशीयदेशीयाः
१० कियन्तो जना उत्थाय स्तिफानेन सार्द्धं व्यवदन्त। किन्तु स्तिफानो ज्ञानेन
पवित्रेणात्मना च ईदृशीं कथां कथितवान् यस्यास्त आपत्तिं कर्त्तुं नाशक्नुवन्।
११ पश्चात् तै र्लोभिताः कतिपयजनाः कथामेनाम् अकथयन् वयं तस्य
१२ मुखतो मुसा ईश्वरस्य च निन्दावाक्यम् अश्रौष्म। अपरञ्च ते लोकानां लोक-
प्राचीनानाम् अध्यापकानाञ्च प्रवृत्तिं जनयित्वा स्तिफानस्य सन्निधिम्
१३ आगत्य तं धृत्वा महासभामध्यम् आनयन्। तदनन्तरं कतिपयजनेषु
मिथ्यासाक्षिषु समानीतेषु तेऽकथयन् एष जन एतत्पुण्यस्थानव्यवस्थयो
१४ र्निन्दातः कदापि न निवर्त्तते; फलतो नासरीययीशुः स्थानमेतद्
उच्छिन्नं करिष्यति मुसासमर्पितम् अस्माकं व्यवहरणम् अन्यरूपं करिष्यति
१५ तस्यैतादृशीं कथाम वयम् अशृणुम। तदा महासभास्थाः सर्व्वे तं प्रति
स्थिरां दृष्टिं कृत्वा स्वर्गदूतमुखसदृशं तस्य मुखम् अपश्यन्।

## ७ सप्तमाध्यायः।

१ महायाजकं प्रति स्तिफानस्योत्तरं ९ पूर्व्वपुरुषाणां वृत्तान्तकथनं १७ मुसावृत्तान्त-कथनं ३७ सुलेमानः समयं यावत् लोकानां कथा ५१ यिहूदीयान् प्रति स्तिफानतर्जनं ५४ प्रस्तराघातेन स्तिफानस्य वधश्च।

ततः परं महायाजकः पृष्टवान् एषा कथा किं सत्या? ततः स प्रत्यवदत् १
हे पितरो हे भ्रातरः सर्व्वे लोका मनांसि निधत्त। अस्माकं पूर्व्वपुरुष २
इब्राहीम् हारणनगरे वासकरणात् पूर्व्वं यदा अराम् नहरयिम् देशे
आसीत्; तदा तेजोमय ईश्वरो दर्शनं दत्त्वा तमवदत् त्वं स्वदेशज्ञाति- ३
मित्राणि परित्यज्य यं देशमहं दर्शयिष्यामि तं देशं व्रज। अतः स ४
कसदीयदेशं विहाय हारणनगरे न्यवसत् तदनन्तरं तस्य पितरि मृते
यत्र देशे यूयं निवसथ स एनं देशमागच्छत्। किन्त्वीश्वरः कमप्य- ५
धिकारम् अर्थाद् एकपदपरिमितां भूमिमपि नाददात् तदा तस्य कोपि
सन्तानो नासीत् तथापि सन्तानैः सार्द्धम् एतस्य देशस्याधिकारी त्वं
भविष्यसीति तम्प्रत्यङ्गीकृतवान्। ईश्वर इत्थम् अपरमपि कथितवान् ६
तव सन्तानाः परदेशे निवत्स्यन्ति ततस्तद्देशीयलोकाश्चतुःशतवत्सरान्
यावत् तान् दासत्वे स्थापयित्वा तान् प्रति कुव्यवहारं करिष्यन्ति।
अपरम् ईश्वर एनां कथामपि कथितवान् ये लोकास्तान् दासत्वे स्थाप- ७
यिष्यन्ति तान्लोकान् अहं दण्डयिष्यामि ततः परं ते वहिर्गताः सन्तो माम्
अत्र स्थाने सेविष्यन्ते। पश्चात् स तस्मै त्वक्छेदस्य नियमम् दत्तवान् अत ८
इस्हाकनाम्नि इब्राहीम एकपुत्रे जाते, अष्टमदिने तस्य त्वक्छेदम् अक-
रोत् तस्य इस्हाकः पुत्रो याकुव् ततस्तस्य याकुवोऽस्माकं द्वादश पूर्व्व-
पुरुषा अजायन्त।

पश्चात् ते पूर्व्वपुरुषा ईर्ष्यया परिपूर्णा मिसरदेशं प्रेषयितुं युषफं ९
व्यक्रीणन्। किन्त्वीश्वरस्तस्य सहायो भूत्वा सर्व्वस्या दुर्गते रक्षित्वा तस्मै १०
बुद्धिं दत्त्वा मिसरदेशस्य राज्ञः फिरौणः प्रियपात्रं कृतवान् ततो राजा
मिसरदेशस्य स्वीयसर्व्वपरिवारस्य च शासनपदं तस्मै दत्तवान्। तस्मिन् समये ११
मिसरकिनानदेशयो दुर्भिक्षहेतोरतिक्लिष्टत्वात् नः पूर्व्वपुरुषा भक्ष्यद्रव्यं

१२ नालभन्त। किन्तु मिसर्देशे शस्यानि सन्ति याकुब् इमां वार्त्तां श्रुत्वा
१३ प्रथमम् अस्माकं पूर्व्वपुरुषान् मिसरं प्रेषितवान्। ततो द्वितीयवारगमने
युषफ् स्वभ्रातृभिः परिचितोऽभवत्; युषफो भ्रातरः फिरौण्राजेन परि-
१४ चिता अभवन्। अनन्तरं युषफ् भ्रातृगणं प्रेष्य निजपितरं याकुबं निजान्
१५ पञ्चाधिकसप्ततिसंख्यान् ज्ञातिजनांश्च समाहूतवान्। तस्माद् याकुब्
१६ मिसर्देशं गत्वा स्वयम् अस्माकं पूर्व्वपुरुषाश्च तस्मिन् स्थानेऽम्रियन्त। ततस्ते
शिखिमं नीता यत्श्मशानम् इब्राहीम् मुद्रा दत्त्वा शिखिमःपितु र्हामोरः
पुत्रेभ्यः क्रीतवान् तत् श्मशाने स्थापयाञ्चक्रिरे।
१७ 　ततः परम्, ईश्वर इब्राहीमः सन्निधौ शपथं कृत्वा यां प्रतिज्ञां कृतवान्
तस्याः प्रतिज्ञायाः फलनसमये निकटे सति इस्रायेल्लोका मिसर्-
१८ देशे वर्द्धमाना बहुसंख्या अभवन्। शेषे युषफं यो न परिचिनोति
तादृश एको नरपतिरुपस्थायास्माकं ज्ञातिभिः सार्द्धं धूर्त्ततां विधाय
१९ पूर्व्वपुरुषान् प्रति कुव्यवहरणपूर्व्वकं तेषां वंशनाशनाशया तेषां नवजातान्
२० शिशून् बहि र्निरक्षेपयत्। एतस्मिन् समये मुसा जज्ञे, स तु परमसुन्दरो-
२१ ऽभवत् तया पितृगृहे मासत्रयपर्य्यन्तं पालितोऽभवत्। किन्तु तस्मिन्
बहि र्निक्षिप्ते सति फिरौण्राजस्य कन्या तम् उत्तोल्य नीत्वा दत्तकपुत्रं कृत्वा
२२ पालितवती। तस्मात् स मुसा मिसर्देशीयायाः सर्व्वविद्यायाः पारदृश्वा
२३ सन् वाक्ये क्रियायाञ्च शक्तिमान् अभवत्। अपरञ्च स सम्पूर्णचत्वारिं-
शद्वत्सरवयस्को भूत्वा इस्रायेलीय वंशनिजभ्रातृन् साक्षात् कर्त्तुं मतिं चक्रे।
२४ पश्चात् तेषां जनमेकं हिंसितं दृष्ट्वा तस्य सपक्षः सन् हिंसितजनम् उप-
२५ कृत्य मिसरीयजनं जघान। तस्य हस्तेनेश्वरस्तान् उद्धरिष्यति तस्य
२६ भ्रातृगण इति ज्ञास्यति स इत्यनुमानं चकार किन्तु ते न बुबुधिरे। तत्परे
ऽहनि तेषाम् उभयो र्जनयो र्वाक्कलह उपस्थिते सति मुसाः समीपं गत्वा
तयो र्मेलनं कर्त्तुं मतिं कृत्वा कथयामास हे महाशया यूयं भ्रातरः परस्परम्
२७ अन्यायं कुतः कुरुथ? ततः समीपवासिनं प्रति यो जनोऽन्यायं चकार स
तं दूरीकृत्य कथयामास, अस्माकमुपरि शास्तृत्वविचारयितृत्वपदयोः कस्त्वां

नियुक्तवान्? ह्यो यथा मिसरीयं हतवान् तथा किं मामपि हनिष्यसि? तदा २८
मुसा एतादृशीं कथां श्रुत्वा पलायनं चक्रे ततो मिदियन्देशं गत्वा प्रवासी २९
सन् तस्थौ ततस्तत्र स्थाने तस्य द्वौ पुत्रौ जज्ञाते। अनन्तरं चत्वारिंशद्वत्स- ३०
रेषु गतेषु सीनीपर्व्वतस्य प्रान्तरे प्रज्वलितस्तम्बस्य वह्निशिखास्थः सन्
परमेश्वरस्य दूतस्तस्मै दर्शनं ददौ। मुसास्तं विलोक्य विस्मयं मत्वा ३१
विशेषं ज्ञातुं निकटं गच्छति; एतस्मिन् समये, अहं तव पूर्व्वपुरुषाणाम् ३२
ईश्वरोऽर्थात् इब्राहीम ईश्वर इस्हाक ईश्वरो याकुब ईश्वरश्च, मुसामुद्दिश्य
परमेश्वरस्यैतादृशी विहायसीया वाणी बभूव; ततः स कम्पान्वितः सन्
निरीक्षितुं पुनः साहसं कर्त्तुं न शशाक। पश्चात् परमेश्वरस्तं जगाद तव ३३
पादयोः पादुके मोचय यत्र स्थाने तिष्ठसि सा पवित्रा भूमिः। अहं ३४
मिसरदेशस्थानां निजलोकानां दुर्द्दशां नितान्तम् अपश्यं तेषां कातर्य्यो-
क्तिञ्च श्रुतवान् तस्मात् तान् उद्धर्त्तुम् अवरुह्यागमम्; इदानीम् आगच्छ
मिसरदेशं त्वां प्रेषयामि। पश्य शास्तृत्वविचारयितृत्वपदयोस्त्वां को नियुक्त- ३५
वान् इति वाक्यमुक्त्वा ते यं मुसाम् अवजानन् यो दूतः स्तम्बमध्ये दर्शनं
ददौ तेन दूतेन तं मुसाम् ईश्वरः शास्तारं मुक्तिदातारञ्च कृत्वा प्रेषयामास।
तस्मात् मिसरदेशे सुफ्नाम्नि समुद्रे च पश्चात् चत्वारिंशद्वत्सरान् यावत् ३६
महाप्रान्तरे नानाप्रकारम् अद्भुतं कर्म्म लक्षणञ्च दर्शयित्वा स तान् वहिः
कृत्वा समानिनाय।

अपरञ्च प्रभुः परमेश्वरो युष्माकं भ्रातृगणस्य मध्ये मादृशम् एकं भवि- ३७
ष्यद्वक्तारम् उत्पादयिष्यति तस्य कथायां यूयं मनो निधास्यथ, यो जन
इस्रायेलः सन्तानेभ्य एनां कथां कथयामास स एष मुसाः। अपरं यो जनो ३८
महाप्रान्तरे मण्डलीमध्ये सीनीपर्व्वते स्वं प्रति वाक्यवादिना दूतस्य सङ्गी,
अस्माकं पितृगणस्यापि सङ्गी सन् अस्मभ्यं दातुं जीवनदायकं वाक्यं लेभे
स एष मुसाः। अपरम् अस्माकं पूर्व्वपुरुषास्तम् अमान्यं कृत्वा स्वेभ्यो दूरी- ३९
कृत्य मिसरदेशं परावृत्य गन्तुं मनोभिरभिलष्य हारोणं जगदुः, अस्माकम् ४०
अग्रेऽग्रे गन्तुम् अस्मदर्थं देवगणं निर्म्माहि यतो यो मुसा अस्मान् मिसर-

देशाद् वहिः कृत्वा आनीतवान् तस्य किं जातम् अस्माभि र्न ज्ञायते।
४१ तस्मिन् समये ते गोवत्साकृतिं प्रतिमां निर्म्माय तामुद्दिश्य नैवेद्यमुत्सृज्य
४२ स्वहस्तकृतवस्तुना आनन्दितवन्तः। तस्माद् ईश्वरस्तेषां प्रति विमुखः सन् आकाशस्थं ज्योतिर्गणं पूजयितुं तेभ्यो ददौ यादृशं भविष्यद्वादिनां ग्रन्थेषु लिखितमास्ते यथा

'इस्रायेलीयवंशा रे चत्वारिंशत्समान् पुरा।
महति प्रान्तरे संस्था यूयन्तु यानि यानि हि।
बलिहोमादिकर्म्माणि कृतवन्तस्तु तानि किं।
मां समुद्दिश्य युष्माभिः प्रकृतानीति नैव हि।
४३ किन्तु वो मोलिगाख्यस्य देवस्य दूष्यमेव च।
युष्माकं रिम्फनाख्याया देवतायाश्च तारका।
एतयोरुभयो र्मूर्त्ती युष्माभिः परिपूजिते।
अतो युष्मांस्तु बाबिलः पारं नेष्यामि निश्चितं।'

४४ अपरञ्च यन्निदर्शनम् अपश्यस्तदनुसारेण दूष्यं निर्म्माहि यस्मिन् ईश्वरो मुसाम् एतद्वाक्यं बभाषे तत् तस्य निरूपितं साक्ष्यस्वरूपं दूष्यम् अस्माकं
४५ पूर्व्वपुरुषैःसह प्रान्तरे बभूव। पश्चात् यिहोशूयेन सहिता तेषां वंशजाता अस्माकं पूर्व्वपुरुषा यान् ईश्वरोऽस्माकं पूर्व्वपुरुषाणां पुरतो दूरीचकार तेषामन्यदेशीयानाम् अधिकारं तद् दूष्यं आनिन्यिरे तच्च दायूदोऽधि-
४६ कारं यावत् तत्र स्थान आसीत्। स दायूद् परमेश्वरस्यानुग्रहं प्राप्य
४७ याकुब ईश्वरार्थम् एकं दूष्यं निर्म्मातुं ववाञ्छ; किन्तु सुलेमान् तदर्थं
४८ मन्दिरम् एकं निर्म्मितवान्। तथापि यः सर्व्वोपरिस्थः स कस्मिंश्चिद् हस्तकृते मन्दिरे निवसतीति नहि भविष्यद्वादी कथामेतां कथयति यथा

४९ 'परेशो वदति स्वर्गो राजसिंहासनं मम।
मदीयं पादपीठञ्च पृथिवी भवति ध्रुवं।
किं मन्दिरं विनिर्म्माय तस्मान्मह्यं प्रदास्यथ।

५० विश्रामाय मदीयं वा स्थानं किं विद्यते त्विह।
सर्व्वाण्येतानि वस्तूनि किं मे हस्तकृतानि न॥

हे अनाज्ञाग्राहका अन्तःकरणे श्रवणे चापवित्रलोकाः यूयम् ५१
अनवरतं पवित्रस्यात्मनः प्रातिकूल्यम् आचरथ, युष्माकं पूर्व्वपुरुषा यादृशा
यूयमपि तादृशाः। युष्माकं पूर्व्वपुरुषाः कं भविष्यद्वादिनं नाताडयन्? ५२
ये तस्य धार्म्मिकस्य जनस्यागमनकथां कथितवन्तस्तान् अघ्नन् यूयम् अधुना
विश्वासघातिनो भूत्वा तं धार्म्मिकं जनम् अहत। अपरं स्वर्गीयदूतगणेन ५३
व्यवस्थां प्राप्यापि तां नाचरथ।

इमां कथां श्रुत्वा ते मनःसु विद्धाः सन्तस्तं प्रति दन्तघर्षणम् अकुर्व्वन्। ५४
किन्तु स्तिफानः पवित्रेणात्मना पूर्णो भूत्वा गगणं प्रति स्थिरदृष्टिं कृत्वा ५५
ईश्वरस्य तेज ईश्वरस्य दक्षिणे दण्डायमानं यीशुञ्च विलोक्य कथितवान्;
पश्यत मेघद्वारं मुक्तम् ईश्वरस्य दक्षिणे स्थितं मानवसुतञ्च पश्यामि। ५६
तदा ते प्रोच्चैः शब्दं कृत्वा कर्णेष्वङ्गुली निधाय एकचित्तीभूय तम् ५७
आक्रामन्। पश्चात् तं नगराद् बहिः कृत्वा प्रस्तरैराघ्नन्, साक्षिणो लोकाः ५८
शौलनाम्नो यूनश्चरणसन्निधौ निजवस्त्राणि स्थापितवन्तः। अनन्तरं हे ५९
प्रभो यीशो मदीयमात्मानं गृहाण स्तिफानस्येति प्रार्थनवाक्यवदनसमये
ते तं प्रस्तरैराघ्नन्। तस्मात् स जानुनी पातयित्वा प्रोच्चैःशब्दं कृत्वा हे ६०
प्रभो पापमेतद् एतेषु मा स्थापय, इत्युक्त्वा महानिद्रां प्राप्नोत्। तस्य
हत्याकरणं शौलोपि सममन्यत।

---

८ अष्टमोध्यायः।

१ ताडनाभि मण्डलीयलोकेषु विकीर्णेषु फिलिपस्य शोमिरोण्नगरगमनं तथानेका-
श्चर्य्यक्रियाकरणं ९ मायाविशिमोनो विश्वसनं १४ मुद्राभिः पवित्रमात्मानं क्रेतुं
चेष्टाया शिमोनोपराधः २६ फिलिपस्य कूश्देशीयक्लीबस्य स्नानञ्च।

अपरञ्च तस्मिन् समये यिरूशालम्नगरस्थां मण्डलीं प्रति महाताड- १
नायां जातायां प्रेरितलोकान् हित्वा सर्व्वेऽपरे यिहूदाशोमिरोण्-
देशयो र्नानास्थाने विकीर्णाः सन्तो गताः। अन्यच्च भक्तलोकास्तं स्तिफानं २

३ श्मशाने स्थापयित्वा बहु व्यलपन्। किन्तु शौलो गृहे गृहे भ्रमित्वा स्त्रियः
४ पुरुषांश्च धृत्वा कारायां बद्धा मण्डल्या महोत्पातं कृतवान्। अन्यच्च
५ ये विकीर्णा अभवन् ते सर्व्वत्र भ्रमित्वा सुसंवादं प्राचारयन्। तदा फिलिपः
६ शोमिरोण्नगरं गत्वा ख्रीष्टाख्यानं प्राचारयत्; ततोऽशुचिभूतग्रस्तलोकेभ्यो
भूतास्तीत्कृत्यागच्छन् तथा बहवः पक्षाघातिनः खञ्जा लोकाश्च स्वस्था
७ अभवन्; तस्मात् लोका ईदृशं तस्याश्चर्य्यं कर्म्म विलोक्य निशम्य च सर्व्वं
८ एकचित्तीभूय तेनोक्ताख्याने मनांसि न्यदधुः; तस्मिन्नगरे महानन्द-
श्चाभवत्।

९ अपरञ्च ततः पूर्व्वं तस्मिन्नगरे शिमोन्नामा कश्चिज्जनो बह्वी माया-
क्रियाः कृत्वा स्वं कञ्चन महापुरुषं प्रोच्य शोमिरोणीयानां मोहं जनया-
१० मास। तस्मात् स मानुष ईश्वरस्य महाशक्तिस्वरूप इत्युक्त्वा बालवृद्ध
११ वनितादयः सर्व्वे लोकास्तस्मिन् मनांसि न्यदधुः। स बहुकालान्
मायाविक्रियया सर्व्वान् अतीव मोहयाञ्चकार तस्मात् ते तं मेनिरे।
१२ किन्त्वीश्वरस्य राज्यस्य यीशुख्रीष्टस्य नाम्नश्चाख्यानप्रचारिणः फिलिपस्य
१३ कथायां विश्वस्य तेषां स्त्रीपुरुषोभयलोका मज्जिता अभवन्। शेषे स शिमो-
नपि स्वयं प्रत्यैत् ततो मज्जितः सन् फिलिपेन कृताम् आश्चर्य्यक्रियां
लक्षणञ्च विलोक्य असम्भवं मन्यमानस्तेन सह स्थितवान्।

१४ इत्थं शोमिरोण्देशीयलोका ईश्वरस्य कथाम् अगृह्लन् इतिवार्त्तां
यिरूशालम्नगरस्थप्रेरिताः प्राप्य पितरं योहनञ्च तेषां निकटे प्रेषि-
१५ तवन्तः। ततस्तौ तत्स्थान उपस्थाय लोका यथा पवित्रम् आत्मानं
१६ प्राप्नुवन्ति तदर्थं प्रार्थयेतां। यतस्ते पुरा केवलप्रभुयीशो र्नाम्ना मज्जित-
मात्रा अभवन् नतु तेषां मध्ये कमपि प्रति पवित्रस्यात्मन आवि-
१७ र्भावो जातः। किन्तु प्रेरिताभ्यां तेषां गात्रेषु करेष्वर्पितेषु सत्सु ते पवित्रम्
१८ आत्मानम् अप्राप्नुवन्। इत्थं लोकानां गात्रेषु प्रेरितयोः करार्पणेन तान्
पवित्रम् आत्मानं प्राप्तान् दृष्ट्वा स शिमोन् तयोः समीपे मुद्रा आनीय
१९ कथितवान्; अहं यस्य गात्रे हस्तम् अर्पयिष्यामि तस्यापि यथेत्थं पवि-

चात्मप्राप्ति र्भवति तादृशीं शक्तिं मह्यं दत्तं। किन्तु पितरस्तं प्रत्यवदत् २०
तव मुद्रास्त्वया सह विनश्यन्तु यत ईश्वरस्य दानं मुद्राभिः क्रीतं भवति
त्वमित्थं बुद्धवान्; अपरम् ईश्वराय तवान्तःकरणं सरलं नहि तस्माद् २१
अत्र तवांशोऽधिकारश्च कोपि नास्ति। अत एतत्पापहेतोः खेदान्वितः २२
सन् केनापि प्रकारेण तव मनस एतस्याः कुकल्पनायाः क्षमा भवति
एतदर्थम् ईश्वरे प्रार्थनां कुरु; यतस्त्वं तिक्तपित्ते पापस्य बन्धने च यदसि २३
तन्मया बुद्धम्। तदा शिमोन् अकथयत् तर्हि युवाभ्यामुदिता कथा मयि २४
यथा न फलति तदर्थं युवां मन्निमित्तं प्रभौ प्रार्थनां कुरुतं। अनेन २५
प्रकारेण तौ साक्ष्यं दत्त्वा प्रभोः कथां प्रचारयन्तौ शोमिरोणीयानाम्
अनेकग्रामेषु सुसंवादञ्च प्रचारयन्तौ यिरूशालम् नगरं परावृत्य गतौ।

ततः परम्, ईश्वरस्य दूतः फिलिपम् इत्यादिशत् त्वमुत्थाय दक्षिणस्यां २६
दिशि यिरूशालमः प्रान्तरस्य मध्येन यो मार्गो ऽसानगरं याति तस्मिन्
मार्गे गच्छ। ततः स उत्थाय गतवान्; तदा कूश्लोकानां राज्ञ्याः कन्दा- २७
कीनाम्नः सर्व्वसम्पत्तेरधीशः कूशदेशीय एकः षण्डो भजनार्थं यिरूशालम्-
नगरम् आगत्य पुनरपि रथमारुह्य यिशायियनाम्नो भविष्यद्वादिनो ग्रन्थं २८
पठन् परावर्त्तमानो गच्छति। एतस्मिन् समये आत्मा फिलिपम् अवदत् २९
त्वम् एतस्य रथस्य समीपं गत्वा तेन सार्द्धं मिल। तस्मात् स धावन् तस्य ३०
सन्निधावुपस्थाय तेन पठ्यमानं यिशायियभविष्यद्वादिनो वाक्यं श्रुत्वा
पृष्टवान् यत् पठसि तत् किं बुध्यसे? ततः स कथितवान् केनचिन्न बोधि- ३१
तोहं कथं बोद्धुं शक्ष्यामि? ततः स फिलिपं रथमारोढुं स्वेन सार्द्धम् उपवे-
ष्टुञ्च न्यवेदयत्। स शास्त्रस्यैतद्वाक्यं पठितवान् यथा ३२

'मेषशावकवत् हन्तुं स तु नीतो भविष्यति।
मेषाणां लोमछेत्तृणां सन्निधौ मेषशावकः।
यथा तिष्ठति निःशब्दस्तथा स्थास्यति सोपि हि।
३३ अन्यायेन विचारेण हृतो दैन्याद् भविष्यति।

तदीयानि चरित्राणि को वा वर्णयितुं क्षमः ?
यस्मादेव धरित्रीतः स उच्छिन्नो भविष्यति।

३४ अनन्तरं स फिलिपम् अवदत् निवेदयामि भविष्यद्वादी यामिमां कथां
३५ कथयामास सा किं स्वस्मिन् वा कस्मिंश्चिद् अन्यस्मिन् ? ततः फिलिप-
३६ स्तत्प्रकरणम् आरभ्य यीशोरुपाख्यानं तस्याग्रे प्रास्तौत्। इत्थं मार्गे
गच्छन्तौ जलाशयस्य समीप उपस्थितौ ; तदा क्लीबोऽवादीत् पश्यात्र स्थाने
३७ जलमास्ते मम मज्जने का बाधा? ततः फिलिप उत्तरं व्याहरत् स्वान्तः-
करणेन साकं यदि प्रत्येषि तर्हि बाधा नास्ति ; ततः स कथितवान् यीशु-
३८ ख्रीष्ट ईश्वरस्य पुत्र इत्यहं प्रत्येमि। तदा रथं स्थगितं कर्त्तुम् आदिष्टे
फिलिपक्लीबौ द्वौ जलम् अवारुहतां ; तदा फिलिपस्तम् मज्जितम् अक-
३९ रोत्। तत्पश्चात् जलमध्याद् उत्थितयोः सतोः परमेश्वरस्यात्मा फिलिपं
हृत्वा नीतवान् तस्मात् क्लीबः पुनस्तं न दृष्टवान् तथापि हृष्टचित्तः सन्
४० स्वमार्गे गतवान्। किन्तु फिलिपो ऽस्दोद्नगरे उपस्थाय तस्मात् कैस-
रियानगर उपस्थितिकालपर्य्यन्तं सर्व्वस्मिन्नगरे सुसंवादं प्रचारयन्
गतवान्।

---

९ नवमोऽध्यायः।

१ दम्मेषकनगरे ख्रीष्टीयान्लोकान् ताडयितुं शौलगमनं मार्गमध्ये ख्रीष्टस्य दर्शनञ्च १० हनानियेन तस्मै चक्षुर्दानं तस्य मज्जनञ्च १९ शौलेन भजनभवने ख्रीष्टस्य सुसंवादप्रचारणं २३ तम्प्रति यिहूदीयानां विपक्षता ३१ मण्डल्याः शान्तिः ३२ पितरस्यैनेयस्वास्थ्यकरणं ३६ पितरेण दर्क्कायै जीवनदानञ्च।

१ तत्कालपर्य्यन्तं शौलः प्रभोः शिष्याणां प्रातिकूल्येन ताडनाबधयोः
२ कथां निःसारयन् महायाजकस्य सन्निधिं गत्वा तन्मतग्राहिणां यं कञ्चित्
स्त्रियं पुरुषञ्च पश्यति तान् धृत्वा बद्ध्वा यिरूशालमम् आनयतीत्याशयेन
३ दम्मेषक् नगरीयं भजनभवनं प्रति पत्रं याचितवान्। अनन्तरं गच्छन्
दम्मेषक् नगरनिकट उपस्थितवान् ततोऽकस्माद् आकाशात् तस्य चतुर्दिक्षु
४ तेजसः प्रकाशनात् स भूमावपतत्। पश्चात् हे शौल हे शौल कुतो मां
५ ताडयसि स्वं प्रति प्रोक्तम् एतं शब्दं श्रुत्वा स पृष्टवान्, हे प्रभो भवान् कः?

तदा प्रभुरकथयत् यं यीशुं त्वं ताडयसि स एवाहं; कण्टकस्य मुखे पदा-
घातकरणं तव दुःसाध्यम्। तदा कम्पमानो विस्मयापन्नश्च सोवदत् हे ६
प्रभो मया किं कर्त्तव्यं भवत इच्छा का? ततः प्रभुराज्ञापयत् उत्थाय
नगरं गच्छ तत्र त्वया यत् कर्त्तव्यं तद् वदिष्यते। अपरं तस्य सङ्गिनो ७
लोकाश्च तं शब्दं श्रुतवन्तः किन्तु कमपि न दृष्ट्वा स्तब्धाः सन्तः स्थितवन्तः।
अनन्तरं शौलो भूमित उत्थाय चक्षुषी उन्मील्य कमपि न दृष्टवान्। तदा ८
लोकास्तस्य हस्तौ धृत्वा दम्मेषक् नगरम् आनयन्। ततः स दिनत्रयं ९
यावद् अन्धो भूत्वा न भुक्तवान् पीतवांश्च।

तदनन्तरं प्रभुस्तद्दम्मेषक्नगरवासिनं शिष्यमेकं दर्शनं दत्त्वा आहूत- १०
वान् हे हनानिय! ततः स प्रत्यवादीत् हे प्रभो पश्य शृणोमि। तदा ११
प्रभुस्तमाज्ञापयत् त्वमुत्थाय सरलनाम्नि मार्गे गत्वा यिहूदानिवेशने
तार्षनगरस्य शौलनामानं जनं गवेषयन् पृच्छ। पश्य स प्रार्थनां करोति १२
तथा हनानियनामक एको जनस्तस्य समीपम् आगत्य तस्य गात्रे हस्ता-
र्पणं कृत्वा दृष्टिं दत्तवान् इत्थं स्वप्ने दृष्टवान्। तस्माद् हनानियः प्रत्यवदत् १३
हे प्रभो यिरूशालमि पवित्रलोकान् प्रति सोऽनेकहिंसां कृतवान्; अप- १४
रम् अत्र स्थाने ये लोकास्तव नाम्नि प्रार्थनां कुर्व्वन्ति तानपि बद्धुं स
प्रधानयाजकेभ्यः शक्तिं प्राप्तवान् इमां कथाम् अहम् अनेकानां मुखेभ्यः
श्रुतवान्। किन्तु प्रभुरकथयत् याहि भिन्नदेशीयलोकानां भूपतीनाम् १५
इस्रायेल्लोकानां निकटे मम नाम प्रचारयितुं स जनो मम मनोनीत-
पात्रमास्ते। अपरञ्च मम नामनिमित्तं तेन कियान् महान् क्लेशो भोक्तव्य १६
एतत् तं दर्शयिष्यामि। ततो हनानियो गत्वा गृहं प्रविश्य तस्य गात्रे १७
हस्तार्पणं कृत्वा कथितवान् हे भ्रातः शौल त्वं यथा दृष्टिं प्राप्नोषि पवि-
त्रेणात्मना परिपूर्णो भवसि तदर्थं तव गमनकाले यः प्रभुयीशुस्तुभ्यं दर्श-
नम् अददात् स मां प्रेषितवान्। इत्युक्तमात्रे तस्य चक्षुर्भ्याम् मीनशल्कवत् १८
वस्तुनि निर्गते तत्क्षणात् स प्रसन्नचक्षु र्भूत्वा प्रोत्थाय मज्जितोऽभवत् भुक्त्वा
पीत्वा सबलोऽभवच्च।

१९ ततः परं शौलः शिष्यैः सह कतिपयदिवसान् तस्मिन् दम्मेषक्नगरे
२० स्थित्वा ऽविलम्बं सर्व्वभजनभवनानि गत्वा यीशुरीश्वरस्य पुत्त्र इमां कथां
२१ प्राचारयत्। तस्मात् सर्व्वे श्रोतारश्चमत्कृत्य कथितवन्तो यो यिरूशा-
लम्नगरे एतन्नाम्ना प्रार्थयितृलोकान् विनाशितवान् एवम् एतादृश-
लोकान् बद्ध्वा प्रधानयाजकनिकटं नयतीत्याशया एतत्स्थानमप्यागच्छत्
२२ सएव किमयं न भवति? किन्तु शौलः क्रमश उत्साहवान् भूत्वा यीशु-
रीश्वरेणाभिषिक्तो जन एतस्मिन् प्रमाणं दत्त्वा दम्मेषक्-निवासियिहूदीय-
२३ लोकान् निरुत्तरान् अकरोत्। इत्थं बहुतिथे काले गते यिहूदीयलोका-
स्तं हन्तुं मन्त्रणाम् अकुर्व्वन् किन्तु शौलस्तेषामेतस्या मन्त्रणाया वार्त्तां
२४ प्राप्तवान्। अनन्तरं तं हन्तुं ते दिवानिशं गुप्ताः सन्तो नगरस्य द्वारेऽति-
२५ ष्ठन्; तस्मात् शिष्यास्तं नीत्वा रात्रौ पिटके निधाय प्राचीरेणावरोहयन्।
२६ ततःपरं शौलो यिरूशालमं गत्वा शिष्यगणेन सार्द्धं स्थातुम् ऐहत
२७ किन्तु सर्व्वे तस्मादबिभयुः स शिष्य इति च न प्रत्ययन्। एतस्माद् बर्णब्बा
स्तं गृहीत्वा प्रेरितानां समीपमानीय मार्गमध्ये प्रभुः कथं तस्मै दर्शनं
दत्तवान् याः कथाश्च कथितवान् अपरं स यथा साहसी सन् दम्मेषक्-
नगरे यीशो र्नाम प्राचारयत् एतान् सर्व्ववृत्तान्तान् तान् ज्ञापितवान्।
२८ ततः शौलस्तैः सह यिरूशालमि कालं यापयित्वा निर्भयं प्रभोर्यीशो र्नाम
२९ प्राचारयत्; तस्माद् अन्यदेशीयलोकैः सार्द्धं विवादस्योपस्थितत्वात् ते तं
३० हन्तुम् अचेष्टन्त। किन्तु भ्रातृगणस्तज्ज्ञात्वा तं कैसरियानगरं नीत्वा
तार्षनगरं प्रेषितवान्।

३१ इत्थं सति यिहूदियागालील्शोमिरोणदेशीयाः सर्व्वा मण्डल्यो
विश्रामं प्राप्तास्ततस्तासां निष्ठा अभवद् अपरं प्रभो र्भिया पवित्रस्यात्मनः
सान्त्वनया च कालं क्षेपयित्वा बहुसंख्या अभवन्।

३२ ततः परं पितरः स्थाने स्थाने भ्रमित्वा शेषे लोद्नगरनिवासिपवित्र-
३३ लोकानां समीपे स्थितवान्। तदा तत्र स्थाने पक्षाघातव्याधिनाष्टमं वत्सरम्
३४ आरभ्य शय्यागतम् ऐनेयनामानं मनुष्यं साक्षात् प्राप्य तमवदत्; हे ऐनेय

यीशुख्रीष्टस्त्वां स्वस्थम् अकार्षीत् त्वमुत्थाय स्वशय्यां निक्षिप, इत्युक्तमात्रे
स उदतिष्ठत्। एतादृशं दृष्ट्वा लोद्शारोणनिवासिनो लोकाः प्रभुं प्रति ३५
परावर्त्तन्त।

अपरञ्च भिक्षादानादिषु नानाक्रियासु नित्यं प्रवृत्ता या याफोनगर- ३६
निवासिनी टाबिथानामा शिष्या यां दर्क्काम् अर्थाद् हरिणीमप्युक्त्वा आह्व-
यन् तस्मिन् समये सा नारी रुग्ना सती प्राणान् अत्यजत्। ततो लोकास्तां ३७
प्रक्षाल्योपरिस्थप्रकोष्ठे शाययित्वास्थापयन्। लोद्नगरं याफोनगरस्य ३८
समीपस्थं तस्मात्तत्र स्थाने पितर आस्ते, इतिवार्त्तां श्रुत्वा तूर्णं तस्यागमनार्थं
तस्मिन् विनयमुक्त्वा शिष्यगणो द्वौ मनुजौ प्रेषितवान्। तस्मात् पितर ३९
उत्थाय ताभ्यां सार्द्धम् आगच्छत् तत्र तस्मिन् उपस्थित उपरिस्थ-
प्रकोष्ठं समानीते च विधवाः स्वाभिः सहस्थितिकाले दर्कया कृतानि यान्यु-
त्तरीयाणि परिधेयानि च तानि सर्व्वाणि तं दर्शयित्वा रुदत्य-
स्तस्मिन् दिक्षतिष्ठन्। किन्तु पितरस्ताः सर्व्वा बहिः कृत्वा जानुनी ४०
पातयित्वा प्रार्थितवान्। पश्चात् शवं प्रति दृष्टिं कृत्वा कथितवान् हे
टाबीथे त्वमुत्तिष्ठ, इति वाक्य उक्ते सा स्त्री चक्षुषी प्रोन्मील्य पितरम्
अवलोक्योत्थायोपाविशत्। ततः पितरस्तस्याः करौ धृत्वा उत्तोल्य ४१
पवित्रलोकान् विधवाश्चाहूय तेषां निकटे सजीवां तां समार्पयत्। अनन्तरं ४२
एषा कथा समस्तयाफोनगरं व्याप्ता तस्माद् अनेके लोकाः प्रभौ व्यश्वसन्।
अपरञ्च पितरस्तद्याफोनगरीयस्य कस्यचित् शिमोन्नामकस्य चर्म्मकारस्य ४३
गृहे बहुदिनानि न्यवसत्।

---

१० दशमोऽध्यायः।

१ स्वर्गीयदूतेनादिष्टस्य कर्णीलियस्य पितरमाह्वातुं लोकप्रेषणं ९ पितरस्य स्वप्नदर्शनं १७ पितरं प्रति प्रेषितानां लोकानामुपस्थितिः २४ तैः सह पितरस्य गमनं तेन सार्द्धं कर्णीलियस्य सम्भाषणं ३४ पितरस्य प्रत्युत्तरं सुसंवादप्रचारणञ्च ४४ कर्णीलियं तदीयलोकांश्च प्रति पवित्रस्यात्मनोऽवरोहणं तेषां मज्जनञ्च।

कैसरियानगर इतालियाख्यसैन्यान्तर्गतः कर्णीलियनामा सेनापति- १
रासीत् स सपरिवारो भक्त ईश्वरपरायणश्चासीत्; अपरं लोकेभ्यो बहूनि २

३ दानादीनि कृत्वा निरन्तरम् ईश्वरे प्रार्थनाम् अकरोत्। एकदा तृतीय-
प्रहरवेलायाम् ईश्वरस्यैको दूतः सप्रकाशं तत्समीपम् आगत्य कथितवान्
४ हे कर्णीलिय! इति स दृष्टवान्। किन्तु स तं दृष्ट्वा भीतोऽकथयत् हे प्रभो
तदा स तमवदत् तव प्रार्थना दानादि च साक्षिस्वरूपं सद् ईश्वरस्य
५ गोचरमभवत्। इदानीं याफोनगरं प्रति लोकान् प्रेष्य समुद्रतीरे
शिमोननाम्नश्चर्म्मकारस्य गृहे प्रवासकारी पितरनाम्ना विख्यातो यः
६ शिमोन् तम् आह्वायय; तस्मात् त्वया यद्यत् कर्त्तव्यं तत् स वदिष्यति।
७ इत्युपदिश्य दूते प्रस्थिते सति कर्णीलियः स्वगृहस्थानां दासानां द्वौ
८ जनौ नित्यं स्वसङ्गिनां सैन्यानाम् एकां भक्तसेनाञ्चाहूय, सकलमेतं वृत्तान्तं
विज्ञाप्य तान् याफोनगरं प्रति प्राहिणोत्।

९ परस्मिन् दिने ते यात्रां कृत्वा नगरस्य समीप उपातिष्ठन् तदा
१० पितरो द्वितीयप्रहरवेलायां प्रार्थयितुं गृहपृष्ठम् आरोहत्। एतस्मिन्
समये क्षुधार्त्तः सन् किञ्चिद् भोक्तुम् ऐच्छत् किन्तु तेषाम् अन्नासादन-
११ समये स मूर्च्छितः सन्नपतत्। ततो मेघद्वारं मुक्तं चतुर्भिः कोणै र्लम्बितं
१२ वृहद्वस्त्रमिव किञ्चन पात्रं स्वर्गात् पृथिवीम् अवारोहत् दृष्टवान्। अपरञ्च
तन्मध्ये नानाप्रकारा ग्राम्यवन्यपशवः खेचरोरोगामिप्रभृतयो जन्तवश्चा-
१३ सन्। अनन्तरं हे पितर उत्थाय हत्वा भुंक्ष्व तम्प्रतीयं गगणीया वाणी
१४ जाता। तदा पितरः प्रत्यवदत् हे प्रभो ईदृशं मा भवतु, अहम् एतत् कालं
१५ यावत् प्रतिषिद्धम् अशुचि वा द्रव्यं किञ्चिदपि न भुक्तवान्। ततः पुनरपि
तादृशी विहायसीया वाणी जाता यद् ईश्वरः शुचि कृतवान् तत् प्रतिषिद्धं
१६ न जानीहि। इत्थं त्रिः सति तत् पात्रं पुनराकृष्टं सद् आकाशम् अगच्छत्।
१७ ततः परं यद् दर्शनं प्राप्तवान् तस्य को भाव इत्यत्र पितरो मनसा
सन्देग्धि, एतस्मिन् समये कर्णीलियस्य ते प्रेषिता मनुष्या द्वारस्य सन्नि-
१८ धावुपस्थाय, शिमोनो गृहमन्विच्छन्तः सम्पृच्छ्याहूय कथितवन्तः पितरनाम्ना
१९ विख्यातो यः शिमोन् स किमत्र प्रवसति। पुनश्च यदा पितरस्तद्दर्शनस्य
भावं मनसान्दोलयति तदात्मा तमवदत् पश्य त्रयो जनास्त्वां मृगयन्ते।

त्वम् उत्थायावरुह्य निःसन्देहं तैः सह गच्छ मयैव ते प्रेषिताः। तस्मात् २०
पितरोऽवरुह्य कर्णीलियप्रेरितलोकानां निकटमागत्य कथितवान् पश्यत २१
यूयं यं मृगयध्वे स जनोऽहं यूयं किन्निमित्तम् आगताः? ततस्ते प्रत्यवदन् २२
कर्णीलियनामा शुद्धसत्त्व ईश्वरपरायणो यिहूदीयदेशस्थानां सर्व्वेषां
सन्निधौ सुख्यात्यापन्न एकः सेनापति र्निजगृहं त्वामाहूय नेतुं त्वत्तः
कथां श्रोतुञ्च पवित्रदूतेन समादिष्टः। तदा पितरस्तानभ्यन्तरं नीत्वा २३
तेषामातिथ्यं कृतवान् परेऽहनि तैः सार्द्धं यात्रामकरोत्, याफोनिवा-
सिनां भ्रातृणां कियन्तो जनाश्च तेन सह गताः।

परस्मिन् दिवसे कैसरियानगरमध्यप्रवेशसमये कर्णीलियो ज्ञातिबन्धून् २४
आहूयानीय तान् अपेक्ष्य स्थिताः। अनन्तरं पितरे गृह उपस्थिते २५
कर्णीलियस्तं साक्षात् कृत्वा चरणयोः पतित्वा प्राणमत्। तदा पितर- २६
स्तमुत्थाप्य कथितवान् उत्तिष्ठाहमपि मानुषः। तदनन्तरं कर्णीलियेन २७
साकम् आलपन् गृहं प्राविशत्, अपरञ्च तन्मध्ये बहुलोकानां समागमं
दृष्ट्वा तान् अवदत्, अन्यजातीयलोकैः सहालपनं वा तेषां गृहमध्ये प्रवेशनं २८
यिहूदीयानां निषिद्धम् अस्तीति यूयम् अवगच्छथ किन्तु कमपि मानुषम्
अव्यवहार्य्यम् अशुचिं वा ज्ञातुं मम नोचितम् इति परमेश्वरो मां
ज्ञापितवान्। इतिहेतोराह्वानश्रवणमात्रात् काञ्चनापत्तिम् अकृत्वा २९
युष्माकं समीपम् आगतोस्मि,पृच्छामि यूयं किन्निमित्तं माम् आह्वायत?
तदा कर्णीलियो कथितवान् अद्य चत्वारि दिनानि जातानि एतावद्वेलां ३०
यावद् अहम् अनाहार आसम् ततस्तृतीयप्रहरे सति गृहे प्रार्थनसमये
तेजोमयवस्त्रभृद् एको जनो मम समक्षं तिष्ठन् एतां कथाम् अकथयत्,
हे कर्णीलिय त्वदीया प्रार्थना ईश्वरस्य कर्णगोचरा तव दानादि साक्षि- ३१
स्वरूपं भूत्वा तस्य दृष्टिगोचरमभवत्। अतो याफोनगरं प्रति लोकान् ३२
प्रहित्य तत्र समुद्रतीरे शिमोन्नाम्नः कस्यचिच्चर्म्मकारस्य गृहे प्रवासकारी
पितरनाम्ना विख्यातो यः शिमोन् तमाह्वायय ततः स आगत्य त्वाम् उप-
देक्ष्यति। इतिकारणात् तत्क्षणात् तव निकटे लोकान् प्रेषितवान् त्वमा- ३३

गतवान् इति भद्रं कृतवान्। ईश्वरो यान्याख्यानानि कथयितुम्आदिशत्
तानि श्रोतुं वयं सर्व्वे साम्प्रतम् ईश्वरस्य साक्षात् उपस्थिताः स्मः।
३४ तदा पितर इमां कथां कथयितुम् आरब्धवान् ईश्वरो मनुष्याणाम्
३५ अपक्षपाती सन् यस्य कस्यचिद् देशस्य यो लोकस्तस्माद्भीत्वा सत्कर्म्म
करोति स तस्य ग्राह्यो भवति, एतस्य निश्चयम् उपलब्धवानहम्।
३६ योहना मज्जने प्रचारिते सति गालीलदेशमारभ्य समस्तयिहूदीयदेशं
३७ सर्व्वेषां प्रभु र्यो यीशुख्रीष्टस्तेन ईश्वर इस्रायेल्वंशानां निकटे यं सुसंवादं
३८ प्रेष्य सम्मेलनस्य संवादं प्रचारयत् तमुपदेशं यूयं श्रुतवन्तः। फलतो नासि-
रीययीशाव् ईश्वरेण पवित्रेणात्मना शक्त्या चाभिषिक्ते सति स्थाने स्थाने
३९ भ्रमन् सुक्रियां कुर्व्वन् शैतानाक्रान्तान् सर्व्वलोकान् स्वस्थान्अकरोत्, यत
ईश्वरस्तस्य सहाय आसीत् तथा यिहूदीयदेशे यिरूशालमनगरे च यद्यत्
४० कर्म्माकरोत् तेषां सर्व्वेषां साक्षिणो वयं भवामः। अपरञ्च लोकास्तं क्रुशे
वेधित्वा हतवन्तः, किन्तु तृतीयदिवसे ईश्वरस्तमुत्थाप्य सप्रकाशं तमदर्शयत्।
४१ सर्व्वलोकानां निकट इति नहि किन्तु तस्मिन् श्मशानादुत्थिते सति तेन
सार्द्धं भोजनं पानञ्च कृतवन्त एतादृशा ईश्वरस्य मनोनीताः साक्षिणो ये
४२ वयम् अस्माकं निकटे ऽदर्शयत्। अपरञ्च जीवितमृतोभयलोकानां
विचारं कर्त्तुम् ईश्वरो यं नियुक्तवान् स एव स जन इमां कथां प्रचार-
४३ यितुं तस्मिन् प्रमाणं दातुञ्च सोऽस्मान् आज्ञापयत्। पुनश्च यस्तस्मिन्
विश्वसिति स तस्य नाम्ना पापान्मुक्तो भविष्यति तस्मिन् सर्व्वे भविष्यद्वा-
दिनोपि एतादृशं साक्ष्यं ददति।
४४ पितरस्यैतत्कथाकथनकाले सर्व्वेषां श्रोतृणामुपरि पवित्र आत्मा-
४५ वारोहत्। ततः पितरेण सार्द्धम् आगतास्त्वक्छेदिनो विश्वासिनो लोका
४६ अन्यदेशीयेभ्यः पवित्र आत्मनि दत्ते सति, ते नानाजातीयभाषाभिः
कथां कथयन्त ईश्वरं प्रशंसन्ति, इति दृष्ट्वा श्रुत्वा च विस्मयम् आपद्यन्त।
४७ तदा पितरः कथितवान् वयमिव ये पवित्रम् आत्मानं प्राप्तास्तेषां
मज्जनीयं जलं किं कोपि निषेद्धुं शक्नोति? ततः प्रभो र्नाम्ना मज्जिता

भवेतेति तानाज्ञापयत्। अनन्तरं ते स्वैः सार्द्धं कतिपयदिनानि स्थातुं ४८
तं प्रार्थयन्त।

---

११ एकादशोध्यायः।

१ अत्वक्छेदिनः प्रति सुसंवादं प्रचारयितुं पितरं प्रति त्वक्छेदिनां तर्जनं तान् प्रति तस्योत्तरं १९ आन्तियखियानगरं प्रति बर्णब्बाः प्रेरणं २५ पौलान्वेषणे बर्णब्बास्तार्षनगरगमनं २७ दुर्भिक्षकारणाद् बर्णब्बापौलाभ्यां यिरूशालमे धनप्रेषणञ्च।

इत्थं भिन्नदेशीयलोका अपीश्वरस्य वाक्यम् अगृह्लन् इमां वार्त्तां १
यिहूदीयदेशस्थप्रेरिता भ्रातृगणश्च श्रुतवन्तः। ततः पितरे यिरूशालम्- २
नगरं गतवति त्वक्छेदिनो लोकास्तेन सह विवदमाना अवदन् त्वम् अत्वक्- ३
छेदिलोकानां गृहं गत्वा तैः सार्द्धं भुक्तवान्। ततः पितर आदितः क्रमश- ४
स्तत्कार्य्यस्य सर्व्ववृत्तान्तमाख्यातुम् आरब्धवान्। याफोनगर एकदाहं ५
प्रार्थयमानोमूर्च्छितः सन् दर्शनेन चतुःषु कोणेषु लम्बमानं वृहद्वस्त्रमिव
पात्रमेकम् आकाशादवरुह्य मन्निकटम् आगच्छत् अपश्यम्। पश्चात् तद् ६
अनन्यदृष्ट्या दृष्ट्वा विविच्य तस्य मध्ये नानाप्रकारान् ग्राम्यवन्यपशून्
उरोगामिखेचरांश्च दृष्टवान्। ततो हे पितर त्वमुत्थाय गत्वा भुंक्ष्व मां ७
सम्बोध्य कथयन्तं शब्दमेकं श्रुतवान्। ततोहं प्रत्यवदं हे प्रभो नेत्थं भवतु ८
यतः किञ्चन निषिद्धम् अशुचि द्रव्यं वा मम मुखमध्यं कदापि न प्रावि-
शत्। तत ईश्वरो यत् शुचि कृतवान् तन्निषिद्धं न जानीहि इति ९
मांप्रतीदृशी विहायसीया वाणी जाता। त्रिरित्थं सति तत् सर्व्वं १०
पुनराकाशम् आकृष्टं। पश्चात् कैसरियानगरात् त्रयो जना मन्निकटं ११
प्रेषिता यत्र निवेशने स्थितोहं तस्मिन् समये तत्रोपातिष्ठन्। तदा १२
निःसन्देहं तैः सार्द्धं यातुम् आत्मा मामादिष्टवान्; ततः परं मया सह तेषु
षड्भ्रातृषु गतेषु वयं तस्य मनुजस्य गृहं प्राविशाम। सोस्माकं निकटे १३
कथामेताम् अकथयत् एकदा दूत एकः प्रत्यक्षीभूय मम गृहमध्ये तिष्ठन्
मामित्याज्ञापितवान् याफोनगरं प्रति लोकान् प्रहित्य पितरनाम्ना
विख्यातं शिमोनम् आह्वायय; ततस्तव त्वदीयपरिवाराणाञ्च येन परित्राणं १४

१५ भविष्यति तत् स उपदेक्ष्यति। अनन्तरम् अहं तां कथामुत्थाप्य कथितवान्
तेन प्रथमम् अस्माकम् उपरि यथा पवित्र आत्मावरूढवान् तथा तेषा-
१६ मप्युपरि समवरूढवान्। तेन योहन् जले मज्जितवान् इति सत्यं किन्तु
यूयं पवित्र आत्मनि मज्जिता भविष्यथ, इति यद्वाक्यं प्रभुरुदितवान्
१७ तत् तदा मया स्मृतम्। अतः प्रभौ यीशुख्रीष्टे प्रत्ययकारिणो ये वयम्
अस्मभ्यम् ईश्वरो यद् दत्तवान् तत् तेभ्यो लोकेभ्योऽपि दत्तवान् ततः कोऽहं
१८ किमहम् ईश्वरं वारयितुं शक्नोमि? कथामेतां श्रुत्वा ते क्षान्ता ईश्वरस्य
गुणान् अनुकीर्त्य कथितवन्तः, तर्हि परमायुः प्राप्तिनिमित्तम् ईश्वरो-
न्यदेशीयलोकेभ्योऽपि मनःपरिवर्त्तनरूपं दानम् अदात्।

१९ अपरञ्च तस्मिन् समये स्तिफानं प्रति य उपद्रवोऽभूत् तेन विकीर्णाः
सन्तो ये गतास्ते फैनीकीकुप्रान्तियखियासु भ्रमित्वा केवलयिहूदीय-
२० लोकान् विना कस्याप्यन्यस्य समीप ईश्वरस्य कथां न प्राचारयन्; किन्तु
तेषां कुप्रीयाः कुरीनीयाश्च कियन्तो जना आन्तियखियानगरम् आगत्य
२१ यूनानियानिवासियिहूदीयानां समीपेऽपि प्रभोर्यीशोः कथां प्राचारयन्;
अपरं प्रभोः करस्तेषां सहाय आसीत् तस्माद् अनेका लोका विश्वस्य प्रभुं
२२ प्रति परावर्त्तन्त। इति वार्त्तायां यिरूशालमस्थमण्डलीयलोकानां कर्ण-
२३ गोचरीभूतायाम् आन्तियखियानगरं गन्तुं ते बर्णब्बां प्रेरयन्। ततो
२४ बर्णब्बास्तत्र स्थान उपस्थितः सन् ईश्वरस्यानुग्रहस्य फलं दृष्ट्वा सानन्दो
जातः; अपरञ्च स स्वयं साधुः पुनश्च विश्वासेन पवित्रेणात्मना च परिपूर्णः
सन् मनो निष्ठया प्रभावासक्ता स्थातुं सर्व्वान् उपदिष्टवान् तेन प्रभोः
शिष्या अनेका अवर्द्धन्त।

२५ शेषे शौलं मृगयितुं बर्णब्बास्तार्षनगरं प्रस्थितवान् तत्र तस्योद्देशं
२६ प्राप्य तम् आन्तियखियानगरम् आनयत् ततो मण्डलीस्थलोकैः सह
सभां कृत्वा वत्सरमेकं यावद् बहुलोकान् उपादिशत् तस्मिन् आन्तिय-
खियानगरे शिष्याः प्रथमं ख्रीष्टीयनाम्ना विख्याता अभवन्।

२७ ततःपरं भविष्यद्वादिगणे यिरूशालम् आन्तियखियानगरम् आगते

सति आगाबनामा तेषामेक उत्थाय आत्मनः शिक्षया सर्व्वदेशे दुर्भिक्षं २८
भविष्यतीति ज्ञापितवान्; ततः क्लौदियकैसरस्याधिकारे सति तत्
प्रत्यक्षम् अभवत। तस्मात् शिष्या एकैकशः स्वस्वशक्त्यनुसारतो यिहूदीय- २९
देशनिवासिनां भ्रातॄणां दिनयापनार्थं धनं प्रेषयितुं निश्चित्य बर्णब्बा- ३०
शौलयोः करैः प्राचीनलोकानां समीपं तत् प्रेषितवन्तः।

---

१२ द्वादशोऽध्यायः।

१ हेरोद्राजेन पितरस्य कारायां बन्धनं दूतेन तस्य मोचनञ्च १२ मरियमो गृहाय पितरस्य गमनं रक्षकान् प्रति हेरोदाज्ञा च २० अभिमानाद् हेरोद्राजस्य विनाश ईश्वरस्य कथायाः सफलता च।

तस्मिन् समये हेरोद्राजो मण्डल्याः कियज्जनेभ्यो दुःखं दातुं १
प्रारभत विशेषतो योहनः सोदरं याकुबं करवालाघातेन हतवान्। २
तस्माद् यिहूदीयाः सन्तुष्टा अभवन् इति विज्ञाय स पितरं धर्त्तुं ३
गतवान्; तदा किण्वशून्यपूपोत्सवदिनम् उपातिष्ठत्। अत उत्सवे गते सति ४
लोकानां समक्षं तं बहिरानेष्यामीति मनसि स्थिरीकृत्य स तं धारयित्वा
रक्षणार्थम् एकैकसंघे चत्वारो जनाः सन्ति येषां तेषां चतुर्णां रक्षक-
संघानां समीपे तं समर्प्य कारायां स्थापितवान्। किन्तु पितरस्य कारा- ५
स्थितिकारणात् तदर्थं मण्डल्या लोका अविश्राममम् ईश्वरस्य समीपे प्रार्थ-
नाम् अकुर्व्वन्। अनन्तरं हेरोदि तं बहिरानाययितुं उद्यते सति तस्यां रात्रौ ६
पितरो रक्षकद्वयमध्यस्थाने शृङ्खलद्वयेन बद्धः सन् निद्रित आसीत्, तथा
दौवारिकः कारायाः सम्मुखे तिष्ठन् द्वारम् अरक्षीत्। एतस्मिन् समये ७
परमेश्वरस्य दूते समुपस्थिते कारा दीप्तिमती जाता; ततः स दूतः पितरस्य
कुक्षावाघातं कृत्वा तं जागरयित्वा भाषितवान् तूर्णमुत्तिष्ठ; ततस्तस्य
हस्तस्थशृङ्खलद्वयं गलत् पतितं। अनन्तरं स दूतस्तमवदत् बद्धकटिः सन् ८
पादयोः पादुके अर्पय। तेन तथा कृते सति दूतस्तं उक्तवान् गात्रीयवस्त्रं
गात्रे निधाय मम पश्चाद् एहि। ततः पितरस्तस्य पश्चाद् व्रजन् बहिर- ९
गच्छत् किन्तु दूतेन कर्म्मैतद् कृतमिति सत्यमज्ञात्वा स्वप्नं ज्ञातवान्।

१० इत्थं प्रथमां द्वितीयाञ्च कारां लङ्घित्वा येन लौहनिर्म्मितद्वारेण नगरं
गम्यते तत्समीपं प्राप्नुतां ततस्तस्य कवाटं स्वयं मुक्तमभवत् ततस्तौ तत्स्था-
नाद् बहि र्भूत्वा मार्गैकस्य सीमां यावद् गतौ ; ततोऽकस्मात् स दूतः
११ पितरं त्यक्तवान्। तदा स चेतनां प्राप्य कथितवान् निजदूतं प्रहित्य
परमेश्वरो हेरोदो हस्ताद् यिहूदीयलोकानां सर्व्वाशायाश्च मां समुद्धृत-
वान् इत्यहं निश्चयं ज्ञातवान्।

१२ तदनन्तरं स विविच्य यत्र बहवः सम्भूय प्रार्थनां कुर्व्वन्ति तत्र, अर्थात्
मार्कनाम्ना विख्यातो यो योहन् तस्य मातु र्मरियमो निवेशनं गतः।
१३ अपरं पितरेण बहिर्द्वार आहते सति रोदानामा बालिका द्रष्टुं गता।
१४ ततः पितरस्य स्वरं श्रुत्वा सा हर्षयुक्ता सती द्वारं न मोचयित्वा पितरो
१५ द्वारे तिष्ठतीति वार्त्तां वक्तुम् अभ्यन्तरं धावित्वा गतवती। ततस्ते
प्रावोचन् त्वमुन्मत्ता जातासि किन्तु सा मुहुर्मुहुरुक्तवती सत्यमेवैतत्।
१६ तदा ते कथितवन्तस्तर्हि तस्य दूतो भविष्यति। अपरं पितरो द्वारमा-
हतवान् एतस्मिन्नन्तरे ते द्वारं मोचयित्वा पितरं दृष्ट्वा विस्मयं प्राप्ताः।
१७ ततः पितरो निःशब्दं स्थातुं तान् प्रति हस्तेन सङ्केतं कृत्वा परमेश्वरो
येन प्रकारेण तं कारायां उद्धृत्यानीतवान् तस्य वृत्तान्तं तानज्ञापयत्, अपरं
गत्वा याकुवं भ्रातृगणञ्च वार्त्तामेतां वदतेत्युक्त्वा स्थानान्तरं प्रस्थितवान्।
१८ तदनन्तरं प्रभाते सति पितरः क्व गत इत्यत्र रक्षकाणां मध्ये महान्
१९ कलहो जातः। ततो बहु मृगयित्वा तस्योद्देशे न प्राप्ते सति हेरोद्
रक्षकान् संपृच्छ्य तेषां प्राणान् हन्तुम् आदिष्टवान्। पश्चात् स यिहूदीय-
प्रदेशात् कैसरियानगरं गत्वा तत्रावस्थितिं कृतवान्।

२० सोरसीदोन्देशयो र्लोकेभ्यो हेरोद् प्राकुप्यत् किन्तु ते सर्व्व एक-
मन्त्रणाः सन्तस्तस्य समीप उपस्थाय ब्लास्तनामानं तस्य वस्त्रगृहाधीशं
सहायं कृत्वा हेरोदा सार्द्धं सन्धिं प्रार्थयन्त यतस्तस्य राज्ञो देशेन तेषां
२१ देशीयानां भरणम् अभवत्। अतः कुत्रचित् निरूपितदिने हेरोद् राज-
कीयं वस्त्रं परिधाय सिंहासने समुपविश्य तान् प्रति कथां प्राचीन् ततो

लोका उच्चैःकारं प्रत्यवदन्, एष मनुजानां रवो नहि देवताया रवः। तदा २२
हेरोद् ईश्वरस्य सम्मानं नाकरोत्; तस्माद्धेतोः परमेश्वरस्य दूतो हठात् तं २३
प्राहरत् तेनैव स कीटैः क्षीणः सन् प्राणान् अजहात्। किन्त्वीश्वरस्य कथा २४
देशं व्याप्य प्रबलाभवत्। ततः परं बर्णब्बाशौलौ यस्य कर्म्मणो भारं २५
प्राप्नुतां ताभ्यां तस्मिन् सम्पादिते सति मार्कनाम्ना विख्यातो यो योहन् तं
सङ्गिनं कृत्वा यिरूशालम्नगरात् परावृत्य गतौ।

---

१३ त्रयोदशोऽध्यायः।

१ अन्यदेशीयान् प्रति बर्णब्बापौलयोः प्रेषणं ४ सर्जियपौलस्य प्रेषणं सर्जियपौलस्य मायाविनर्याशोश्च वृत्तान्तः १३ आन्तियखियानगरे पौलस्य ख्रीष्टकथाप्रचारः २६ परित्राणकथाग्रहणाय तस्य विनयः ४२ बहुलोकैः कथाग्रहणं ४४ यिहूदीयलोकानां विपरीतत्वञ्च।

अपरञ्च बर्णब्बाः, शिमोन् यं नीगिरं वदन्ति, कुरीनीयलूकियो, १
हेरोदा राज्ञा सह कृतविद्याभ्यासो मिनहेम्, शौलश्चैते कियन्तो
जना भविष्यद्वादिन उपदेष्टार आन्तियखियानगरे स्थितवन्तः। अपरं २
यदोपवासं कृत्वेश्वरम् असेवन्त तस्मिन् समये पवित्र आत्मा कथित-
वान् अहं यस्मिन् कर्म्मणि बर्णब्बाशौलौ नियुक्तवान् तत्कर्म्म कर्त्तुं तौ
पृथक् कृत्वा दत्त। ततस्ताभ्याम् उपवासप्रार्थनयोः कृतयोः सतोस्ते तयो ३
र्गात्रयो र्हस्तार्पणं कृत्वा तौ व्यसृजन्।

ततः परं तौ पवित्रेणात्मना प्रेरितौ सन्तौ सिलूकियादेश उपस्थाय ४
समुद्रपथेन कुप्रोपद्वीपम् अगच्छतां। ततः शालामीनगरम् उपस्थाय तत्र ५
यिहूदीयानां भजनभवनं गत्वेश्वरस्य कथां प्राचारयतां; योहनपि
तत्सहचरोऽभवत्। इत्थं ते तस्योपद्वीपस्य सर्व्वत्र भ्रमन्तः पाफ- ६
नगरं उपस्थिताः; अनन्तरं सुविवेचकेन सर्जियपौलनाम्ना तद्देशाधिपतिना
सह भविष्यद्वादिवेशधारी बर्यीशुनामा यो मायावी यिहूदी
आसीत् तं साक्षात् प्राप्तवन्तः। ततः परं तद्देशाधिप ईश्वरस्य कथां ७
श्रोतुं वाञ्छन् पौलबर्णब्बौ न्यमन्त्रयत्; किन्त्विलुमा अर्थात् यं मायाविनं ८
वदन्ति स देशाधिपतिं धर्म्ममार्गाद् बहिर्भूतं कर्त्तुम् अयतत। तस्मात् ९

शौलोऽर्थात् पौलः पवित्रेणात्मना परिपूर्णः सन् तं मायाविनं प्रत्यनन्य-
१० दृष्टिं कृत्वाकथयत् हे नरकिन् धर्म्मद्वेषिन् कौटिल्यदुष्कर्म्मभ्यां परि-
पूर्ण त्वं किं प्रभोः सत्यपथस्य विपर्य्ययं कर्त्तुं निवृत्तो न भविष्यसि?
अधुना परमेश्वरस्तव समुचितं करिष्यति तेन कतिपयदिनानि त्वम्
११ अन्धः सन् सूर्य्यमपि न द्रक्ष्यसि। तत्क्षणाद् रात्रिवद् अन्धकारस्तस्य
दृष्टिम् आच्छादितवान्; तस्मात् तस्य हस्तं धर्त्तुं स लोकमन्विच्छन् इत-
१२ स्ततो भ्रमणं कृतवान्। एनां घटनां दृष्ट्वा स देशाधिपतिः प्रभूपदेशाद्
विस्मित्य विश्वासं कृतवान्।

१३ तदनन्तरं पौलस्तत्सङ्गिगणश्च पाफनगरात् पोतं चालयित्वा पाम्फु-
लियादेशस्य पर्गीनगरम् अगच्छन् किन्तु योहन् तेषां समीपाद् एत्य
१४ यिरूशालमं प्रत्यागच्छत्। पश्चात् ते पर्गीतो यात्रां कृत्वा पिसिदिया-
देशस्य आन्तियखियानगर उपस्थाय विश्रामवारे भजनभवनं प्रविश्य
१५ समुपाविशन्। व्यवस्थाभविष्यद्वाक्ययोः पठितयोः सतो र्हे भ्रातरो लोकान्
प्रति युष्माकं काचिद् उपदेशकथा यद्यस्ति तर्हि तां वदत ताम् प्रति
१६ तस्य भजनभवनस्याधिपतयः कथाम् एतां कथयित्वा प्रैषयन्। अतः पौल
उत्तिष्ठन् हस्तेन सङ्केतं कुर्व्वन् कथितवान् हे इस्रायेलीयमनुष्या हे
१७ ईश्वरपरायणाः सर्व्वे लोका अवधानं कुरुत। एतेषामिस्रायेल्लोकानाम्
ईश्वरोऽस्माकं पूर्व्वपुरुषान् मनोनीतान् कृत्वा गृहीतवान् ततो मिसरि
देशे प्रवसनकाले तेषामुन्नतिं कृत्वा तस्मात् स्वीयबाहुबलेन तान् बहिः
१८ कृत्वा समानयत। तदनन्तरं चत्वारिंशद्वत्सरान् यावन् महाप्रान्तरे तेषां
१९ भरणं कृत्वा किनान्देशान्तर्व्वर्त्तीनि सप्तराज्यानि नाशयित्वा गुटिका-
२० पातेन तेषु सर्व्वदेशेषु तेभ्योऽधिकारं दत्तवान्। अपरं पञ्चाशदधिकचतुः-
शतेषु वत्सरेषु गतेषु शिमूयेल्भविष्यद्वादिपर्य्यन्तं तेषामुपरि विचारयि-
२१ तृन् नियुक्तवान्। तदनन्तरं तै राज्ञि प्रार्थिते, ईश्वरो बिन्यामीनो वंश-
जातस्य कीशः पुत्रं शौलं चत्वारिंशद्वर्षपर्य्यन्तं तेषामुपरि राजानं कृतवान्।
२२ पश्चात् तं पदच्युतं कृत्वा यो मदिष्टक्रियाः सर्व्वाः करिष्यति तादृशं मम

मनोभिमतम् एकं जनं यिशयः पुत्रं दायूदं प्राप्तवान् इदं प्रमाणं यस्मिन्
दायूदि स दत्तवान् तं दायूदं तेषामुपरि राजत्वं कर्त्तुम् उत्पादितवान्।
तस्य स्वप्रतिश्रुतस्य वाक्यस्यानुसारेण इस्रायेल्लोकानां निमित्तं तेषां २३
मनुष्याणां वंशाद् ईश्वर एकं यीशुम् अर्थात् त्रातारम् उदपादयत्। तस्य २४
प्रकाशनात् पूर्व्वं योहन् इस्रायेल्लोकानां सन्निधौ मनःपरावर्त्तनरूपं
मज्जनं प्राचारयत्। अपरञ्च यस्य कर्म्मणो भारं प्राप्तवान् योहन् तन् २५
निष्पादयन् एतां कथां कथितवान् यूयं मां कं जनं जानीथ, अहम् अभि-
षिक्तो नहि किन्तु पश्यत यस्य पादयोः पादुकयो र्बन्धने मोचयितुमपि
योग्यो न भवामि तादृश एको जनो मम पश्चाद् उपतिष्ठति।

हे इब्राहीमो वंशजाता भ्रातरो हे युष्माकं मध्ये यावन्तो लोकास्वे- २६
श्वराद् बिभ्यति युष्मान् प्रति परित्राणस्य कथैषा प्रेरिताभवत्।
यिरूशालम्निवासिनस्तेषाम् अधिपतयश्च तस्य परिचयं न प्राप्य प्रति- २७
विश्रामवारं पठनीयं यद्भविष्यद्वादिनां वचनं तस्याभिप्रायम् अबुद्ध्वा च
तस्य वधेन तद्वचनं सफलम् अकुर्व्वन्। अपरञ्च प्राणहननस्य कमपि हेतुम् २८
अप्राप्यापि पीलातस्य निकटे तस्य वधं प्रार्थयन्त। अपरञ्च तस्मिन् याः २९
कथा लिखिताः सन्ति तदनुसारेण कर्म्म सम्पाद्य तं क्रुशाद् अवतार्य्य
श्मशाने शायितवन्तः। किन्त्वीश्वरः श्मशानात् तमुदस्थापयत्, पुनश्च ३०
गालील्प्रदेशाद् यिरूशालम्नगरं तेन सार्द्धं ये लोका आगच्छन् स बहु- ३१
दिनानि तेभ्यो दर्शनं दत्तवान् अतस्ते लोकान् प्रति साक्षिणः सन्ति।
अपरञ्चास्माकं पूर्व्वपुरुषाणां समक्षम् ईश्वरो यस्मिन् प्रतिज्ञातवान् यथा ३२

'त्वं मे पुत्रोसि चाद्य त्वां समुत्थापितवानहम्।'

इदं यद्वचनं द्वितीयगीते लिखितमास्ते तद् यीशोरुत्थानेन तेषां ३३
सन्ताना ये वयम् अस्माकं सन्निधौ प्रत्यक्षं कृतवान् युष्मान् इमं सुसंवादं
ज्ञापयामि। परमेश्वरेण श्मशानात् तस्योत्थानकरणेन तदीयं शरीरं ३४
कदापि न क्षेष्यते, एतस्मिन् स स्वयं कथितवान् यथा दायूदं प्रति प्रति-
ज्ञातो यो वरस्तमहं तुभ्यं दास्यामि। तदन्यस्मिन् गीतेऽपि कथितवान् ३५

'स्वकीयं पुण्यवन्तं त्वं क्षयितुं नच दास्यसि।

३६ दायूद् ईश्वराभिमतां क्रियां कुर्व्वन् निजायुषि व्ययिते सति स महा-
३७ निद्रां प्राप्य निजैः पूर्व्वपुरुषैः सह मिलितः सन् अक्षीयत ; किन्तु यमी-
३८ श्वरः श्मशानाद् उदस्थापयत् स नाक्षीयत। अतो हे भ्रातरः,अनेन जनेन
३९ पापमोचनं भवतीति युष्मान् प्रति प्रचारितम् आस्ते; फलतो मूसाव्यव-
स्थया यूयं येभ्यो दोषेभ्यो मुक्ता भवितुं न शक्ष्यथ तेभ्यः सर्व्वदोषेभ्य
एतस्मिन् जने विश्वासिनः सर्व्वे मुक्ता भविष्यन्ति कथामेतां यूयं जानीत।
४० अपरञ्च

'अवज्ञाकारिणो लोकाश्चक्षुरुन्मील्य पश्यत।
तथैवासम्भवं ज्ञात्वा स्यात यूयं विलज्जिताः।
यतो युष्मासु तिष्ठत्सु करिष्ये कर्म्म तादृशं।
येनैव तस्य वृत्तान्ते युष्मभ्यं कथितेऽपि हि।
यूयं न तन्तु वृत्तान्तं प्रत्येष्यथ कदाचन।'

४१ येयं कथा भविष्यद्वादिनां ग्रन्थेषु लिखितास्ते सावधाना भवत सा कथा
यथा युष्मान् प्रति न घटते।

४२ अपरञ्च यिहूदीयेषु भजनभवनान् निर्गतेषु भिन्नदेशीयै र्वक्ष्यमाणा
प्रार्थना कृता, आगामिनि विश्रामवारेऽपि कथेयम् अस्मान् प्रति
४३ प्रचारिता भवत्विति। अपरं सभाया भङ्गे सति बहवो यिहूदीयलोका
यिहूदीयमतग्राहिणो भक्तलोकाश्च बर्णब्बापौलयोः पश्चाद् आगच्छन्
तेन तौ तैः सह नानाकथाः कथयित्वेश्वरानुग्रहाश्रयं कृत्वा स्थातुं तान्
प्रावर्त्तयतां।

४४ अनन्तरम् आगामिनि विश्रामवारे नगरस्य प्रायेण सर्व्वे लोका ईश्व-
४५ रीयां कथां श्रोतुं मिलिताः; किन्तु यिहूदीयलोका जननिवहं विलोक्य
ईर्ष्यया परिपूर्णाः सन्तो विपरीतकथाकथनेनेश्वरनिन्दया च पौलेनोक्तां
४६ कथां खण्डयितुं चेष्टितवन्तः। ततः पौलबर्णब्बौ साहसं कृत्वा कथित-
वन्तौ प्रथमं युष्माकं सन्निधावीश्वरीयकथायाः प्रचारणम् उचितमासीत्

इति सत्यं किन्तु तद्ग्राह्यत्वकरणेन यूयं स्वान् अनन्तायुषोऽयोग्यान्
दर्शयथ, एतत्कारणाद् वयम् अन्यदेशीयलोकानां समीपं गच्छामः।
प्रभुरस्मान् इत्थं आदिष्टवान् यथा ४७

'यावच्च जगतः सीमां लोकानां त्राणकारणात्।
मयान्यदेशमध्ये त्वं स्थापितोभूः प्रदीपवत्।'

तदा कथामीदृशीं श्रुत्वा भिन्नदेशीया आह्लादिताः सन्तः प्रभोः कथां ४८
धन्यां धन्याम् अवदन् अपरं यावन्तो लोकाः परमायुःप्राप्तिनिमित्तं
निरूपिता आसन् ते व्यश्वसन्। इत्थं प्रभोः कथा सर्व्वदेशं व्याप्नोत्। किन्तु ४९
यिहूदीयाः सम्मान्याः कतिपया भक्ता योषितो नगरस्य प्रधानपुरुषांश्च ५०
कुप्रवृत्तिं ग्राहयित्वा पौलबर्णब्बौ ताडयित्वास्तस्माद् प्रदेशाद् दूरीकृतवन्तः।
अतः कारणात् तौ निजपदधूलीस्तेषां प्रातिकूल्येन पातयित्वेकनियं ५१
नगरं गतौ। ततः शिष्यगण आनन्देन पवित्रेणात्मना च परिपूर्णोभवत्। ५२

---

## १४ चतुर्दशोऽध्यायः।

१ इकनियनगरे बर्णब्बापौलयोस्ताडनं ८ लुस्त्रानगरे खञ्जमनुष्यस्य स्वास्थ्यं तस्माद् बर्णब्बापौलयोः सत्कारं कर्त्तुं लोकानामुद्यमः १९ प्रस्तराघातात् पौलस्य रक्षा बर्णब्बापौलयो र्नानादेशभ्रमणं मण्डलीलोकानां स्थैर्य्यकरणम् आन्तियखियास्थ-मण्डलीम्प्रति स्वीयकर्म्मणो वार्त्ताप्रेषणञ्च।

ततः परं तौ द्वौ जनौ युगपद् इकनियनगरीययिहूदीयानां भजन- १
भवनं गत्वा यया बहवो यिहूदीया अन्यदेशीयलोकाश्च व्यश्वसन् तादृशीं
कथां कथितवन्तौ। किन्तु विश्वासहीना यिहूदीया अन्यदेशीयलोकान् २
कुप्रवृत्तिं ग्राहयित्वा भ्रातृगणं प्रति तेषां वैरं जनितवन्तः। अतः स्वानु- ३
ग्रहकथायाः प्रमाणं दत्त्वा तयो र्हस्तै र्बहुलक्षणम् अद्भुतकर्म्म च प्राकाशयद्
यः प्रभुस्तस्य कथाः साहसेन प्रचार्य्य तौ तत्र बहुदिनानि समवा-
तिष्ठेतां। किन्तु कियन्तो लोका यिहूदीयानां सपक्षाः कियन्तो लोकाः ४
प्रेरितानां सपक्षा जाता अतो नागरिकजननिवहमध्ये भिन्नवाक्यत्वम्
अभवत्। अनन्तरम् अन्यदेशीया यिहूदीयास्तेषाम् अधिपतयश्च दौरात्म्यं ५
कृत्वा तौ प्रस्तरैराहन्तुं उद्यताः। पश्चात् तौ तद्वार्त्तां प्राप्य लुकायनिया ६

७ देशस्यान्तर्व्वर्त्तिलुस्त्रादर्व्वीं तत्समीपस्थदेशञ्च पलायित्वा तत्र सुसंवादं
प्राचारयतां।

८ तत्रोभयपादयोस्चलनशक्तिहीनो जन्मारभ्य खञ्जः कदापि गमनं
नाकरोत् एतादृश एको मानुषो लूस्त्रानगर उपविश्य पौलस्य कथां
९ श्रुतवान्। एतस्मिन् समये पौलस्तम्प्रति दृष्टिं कृत्वा तस्य स्वास्थ्ये विश्वासं
१० विदित्वा प्रोच्चैः कथितवान् पद्भ्यामुत्तिष्ठन् ऋजुर्भव। ततः स उल्लम्फं
११ कृत्वा गमनागमने कृतवान्। तदा लोकाः पौलस्य तत् कार्य्यं विलोक्य
लुकायनीयभाषया प्रोच्चैः कथामेतां कथितवान् देवा मनुष्यरूपं धृत्वा-
१२ स्माकं समीपम् अवारोहन्। अपरञ्च ते बर्णब्बां यूपितरम् अवदन्
१३ तथा पौलो मुख्यो वक्ता तस्मात् तं मर्कुरियम् अवदन्। पश्चात् तस्य
नगरस्य सम्मुखे स्थापितस्य यूपितरविग्रहस्य याजको वृषं पुष्पमालाञ्च
द्वारसमीपम् आनीय लोकैः सार्द्धं तावुद्दिश्य समुत्सृज्य दातुम् उद्यतः।
१४ किन्तु बर्णब्बापौलौ तद्वार्त्तां श्रुत्वा स्वीयवस्त्रं छित्त्वा लोकानां मध्यं वेगेन
१५ प्रविश्य प्रोच्चैः कथितवन्तौ हे महेच्छाः कुत एतादृशं कर्म्म कुरुथ? आवा-
मपि युष्मादृशौ सुखदुःखभोगिनौ मनुष्यौ य आकाशं पृथिवीं समुद्रञ्च
१६ तन्मध्ये यावन्ति वस्तूनि सन्ति तानि सर्व्वाणि च सृष्टवान्; तथा पूर्व्व-
काले सर्व्वदेशीयलोकान् स्वस्वमार्गे चलितुमनुमतिं दत्त्वा युष्माकं हितैषी
सन् आकाशात् तोयवर्षणेन नानाप्रकारशस्योत्पत्त्या कृत्वा भक्ष्यैरानन्देन च
युष्माकम् अन्तःकरणानि तृप्तानि कृत्वा तानि सर्व्ववस्तूनि निजसाक्षि-
१७ स्वरूपाणि स्थापितवान् तादृशो योऽमर ईश्वर एताः सर्व्वा वृथा कल्पनाः
परित्यज्य तं प्रति यया परावर्त्तध्वे तदर्थम् आवां युष्माकं सन्निधौ सुसंवादं
१८ प्रचारयावः। किन्तु तादृशायां कथायां कथितायामपि तयोः समीप
उत्सृष्टुं लोकनिवहं प्रायेण निवर्त्तयितुं नाशक्नुताम्।

१९ तदनन्तरं आन्तियखियेकनियनगराभ्यां कतिपययिहूदीयलोका
आगत्य लोकान् प्रवर्त्य पौलम् इत्थं प्रस्तरैराघ्नन् तेन स मृतइति
२० विज्ञाय नगरस्य वहिस्तम् आकृष्य नीतवन्तः। किन्तु शिष्यगणे तस्य

चतुर्दिशि तिष्ठति सति स स्वयम् उत्थाय पुनरपि नगरमध्यं प्राविशत्
तत्परेऽहनि बर्णब्बासहितो दर्ब्बीनगरं गतवान्। तत्र सुसंवादं प्रचार्य्य २१
बहुलोकान् शिष्यान् कृत्वा तौ लूस्त्राम् इकनियम् आन्तियखियाञ्च
परावृत्य गतौ। अपरञ्च बहुदुःखानि भुक्त्वापीश्वरराज्यं प्रवेष्टव्यम् २२
इतिकारणाद् धर्म्ममार्गे स्थातुं विनयं कृत्वा शिष्यगणस्य मनःस्थैर्य्यम्
अकुरुतां। अपरञ्च मण्डलीनाम् एकैकप्राचीनं नियुज्य प्रार्थनोपवासौ २३
कृत्वा यत्प्रभौ ते व्यश्वसन् तस्य हस्ते तान् समर्प्य पिसिदियामध्येन २४
पाम्फुलियादेशं गतवन्तौ। पश्चात् पर्गीनगरं गत्वा सुसंवादं प्रचार्य्य २५
अत्तालियानगरं प्रस्थितवन्तौ। तत्पश्चात् तस्मात् समुद्रपथेन गत्वा तौ २६
यत्कर्म्म समपादयतां तत्कर्म्म साधयितुं यन्नगरे दयालोरीश्वरस्य
हस्ते समर्पितौ जातौ तद् आन्तियखियानगरं गतवन्तौ। पश्चात् तत्रोप- २७
स्थाय तन्नगरस्थमण्डलीं संगृह्य स्वाभ्याम् ईश्वरो यद्यत् कर्म्माकरोत् तथा
येन प्रकारेण भिन्नदेशीयलोकान् प्रति विश्वासरूपद्वारम् अमोचयद् एतान्
सर्व्ववृत्तान्तान् तान् ज्ञापितवन्तौ। ततस्तौ शिष्यैः सार्द्धं तत्र बहुदिनानि २८
न्यवसताम्।

---

## १५ पञ्चदशोऽध्यायः।

१ त्वक्छेदे विवादः ६ तस्मिन् प्रेरितानां मन्त्रणाविचारौ। १२ त्वक्छेदिलोकेषु याकुबोविचारः २२ बर्णब्बापौलयो र्हस्ताभ्यां पत्रप्रेषणं ३० आन्तियखियायां तेषां निवसनं ३६ विवादहेतोरुभयो र्विच्छेदश्च।

तदनन्तरं यिहूदियदेशात् कियन्तो जना आगत्य भ्रातृगणमित्थं १
शिक्षितवन्तो मूसाव्यवस्थया यदि युष्माकं त्वक्छेदो न भवति तर्हि
यूयं परित्राणं प्राप्तुं न शक्ष्यथ। ततः पौलबर्णब्बौ तैः सह बहून् विचारान् २
विवादांश्च कृतवन्तौ ततः परं मण्डलीयलोका एतस्याः कथायास्तत्त्वं
ज्ञातुं यिरूशालम्नगरस्थान् प्रेरितान् प्राचीनांश्च प्रति पौलबर्णब्बा-
प्रभृतीन् कतिपयजनान् प्रेषयितुं निश्चयं कृतवन्तः। ततस्ते मण्डल्या ३
प्रेषिताः सन्तः फैणीकीशोमिरोण्देशाभ्यां गत्वा भिन्नदेशीयानां मनः-
परिवर्त्तनस्य वार्त्तया भ्रातृणां परमाह्लादम् अजनयन्। अनन्तरं यिरूशा- ४

त्म्युपस्थाय प्रेरितगणेन लोकप्राचीनगणेन मण्डल्या च ग्राह्या अभवन्
ततः परं खेरोश्वरो यानि कर्म्माणि कृतवान् तेषां सर्व्ववृत्तान्तान् तेषां
५ समक्षम् अकथयन्। किन्तु विश्वासिनः कियन्तः फिरूशीमतग्राहिणो
लोका उत्थाय कथामेतां कथितवन्तो भिन्नदेशीयानां त्वक्छेदं कर्त्तुं
मूसाव्यवस्थां पालयितुञ्च समादेष्टव्यम्।
६ ततः प्रेरिता लोकप्राचीनाश्च तस्य विवेचनां कर्त्तुं सभायां स्थितवन्तः।
७ पश्चाद् बहुविचारेषु जातेषु पितर उत्थाय कथितवान् हे भ्रातरो
यथा भिन्नदेशीयलोका मम मुखात् सुसंवादं श्रुत्वा विश्वसन्ति तदर्थं
बहुदिनात् पूर्व्वम् ईश्वरोऽस्माकं मध्ये मां मनोनीतं कृत्वा गृहीतवान्;
८ अपरम् अन्तर्य्यामीश्वरो यथास्मभ्यं तथा भिन्नदेशीयेभ्यः पवित्रमात्मानं
९ प्रदाय विश्वासेन तेषाम् अन्तःकरणानि पवित्राणि कृत्वा तेषाम् अस्माकञ्च
मध्ये किमपि विशेषं न स्थापयित्वा तेषु स्वयं प्रमाणं दत्तवान् इति यूयं
१० जानीथ। अतएवास्माकं पूर्व्वपुरुषा वयञ्च स्वयं यद्युगस्य भारं सोढुं न
शक्ताः सम्प्रति तं शिष्यगणस्य स्कन्धेषु न्यसितुं कुत ईश्वरस्य परीक्षां
११ करिष्यथ? प्रभो यीशुख्रीष्टस्यानुग्रहेण ते यथा वयमपि तथा परित्राणं
प्राप्तुम् आशां कुर्म्मः।
१२ अनन्तरं बर्णब्बापौलाभ्याम् ईश्वरो भिन्नदेशीयानां मध्ये यद्यद् आश्चर्य्यम्
अद्भुतञ्च कर्म्म कृतवान् तद्वृत्तान्तं तौ स्वमुखाभ्याम् अवर्णयतां सभास्थाः
१३ सर्व्वे नीरवाः सन्तः श्रुतवन्तः। अनन्तरं तेषां कथायां समाप्तायां सत्यां
याकुब् कथयितुम् आरब्धवान् हे भ्रातरो मम कथायाम् मनो निधत्त।
१४ ईश्वरः स्वनामार्थं भिन्नदेशीयलोकानाम् एकं लोकसंघं ग्रहीतुं मतिं कृत्वा
येन प्रकारेण प्रथमं तान् प्रति कृपावलोकनं कृतवान् तं शिमोन् वर्णित-
१५ वान्। भविष्यद्वादिभिरुक्तानि यानि वाक्यानि तैः सार्द्धम् एतस्यैक्यं
भवति यथा लिखितमास्ते
१६ 'सर्व्वेषां कर्म्मणां यस्तु साधकः परमेश्वरः।
स एवेदं वदेद्वाक्यं शेषाः सर्व्वे तु मानवाः।

भिन्नदेशीयलोकाश्च यावन्तो मम नामतः।
भवन्ति हि सुविख्यातास्ते यथा परमेशितुः।
१७ तत्त्वं सम्यक् समीहन्ते तन्निमित्तमहं किल।
परावृत्य समागत्य दायूदः पतितं पुनः।
दूष्यमुत्थापयिष्यामि तदीयं सर्व्ववस्तु च।
पतितं पुनरुत्थाप्य सज्जयिष्यामि सर्व्वथा॥

आ प्रथमाद् ईश्वरः स्वीयं सर्व्वं कर्म्म जानाति। अतएव मम निवेदनमिदं १८
भिन्नदेशीयलोकानां मध्ये ये जना ईश्वरं प्रति परावर्त्तन्त तेषामुपरि पुनः १९
कमपि भारं न न्यस्य देवताप्रसादाशुचिभक्ष्यं व्यभिचारकर्म्म कण्ठसम्पीड्य- २०
मारितप्राणिरक्तभक्ष्यञ्च एतानि परित्यक्तुं लिखामः। यतः पूर्व्वकालतो २१
मूसाव्यवस्थाप्रचारिणो लोका नगरे नगरे सन्ति तथा प्रतिविश्रामवारं
भजनभवने तस्य पाठो भवति।

ततः परं प्रेरितगणो लोकप्राचीनगणः सर्व्वा मण्डली च स्वेषां मध्ये बर्शब्बा २२
नाम्ना विख्यातो यो यिहूदाः सीलश्च भ्रातृगणमध्ये मुख्यौ द्वावेतौ जनौ
मनोनीतौ कृत्वा पौलबर्णब्बाभ्यां सार्द्धम् आन्तियखियानगरं प्रति प्रेषणम्
उचितं बुद्ध्वा ताभ्यां पत्रं प्रैषयन्। तस्मिन् पत्रे लिखितमिदं, आन्ति- २३
यखियासुरियाकिलिकियादेशस्थभिन्नदेशीयभ्रातृगणाय प्रेरितगणस्य
लोकप्राचीनगणस्य भ्रातृगणस्य च नमस्कारः। विशेषतोऽस्माकम् आज्ञाम् २४
अप्राप्यापि कियन्तो जना अस्माकं मध्याद् गत्वा त्वक्छेदो मूसाव्यवस्थाच
पालयितव्याविति युष्मान् शिक्षयित्वा युष्माकं मनसामस्थैर्य्यं कृत्वा युष्मान्
ससन्देहान् अकुर्व्वन् एतां कथां वयम् अशृन्म;तत्कारणाद् वयम् एक- २५
मन्त्रणाः सन्तः सभायां स्थित्वा प्रभो र्यीशुख्रीष्टस्य नामनिमित्तं यौ मृत्यु-
मुखगतौ ताभ्यामस्माकं प्रियबर्णब्बापौलाभ्यां सार्द्धं मनोनीतलोकानां २६
केषाञ्चिद् युष्माकं सन्निधौ प्रेषणम् उचितं बुद्धवन्तः। अतो यिहूदासीलौ २७
युष्मान् प्रति प्रेषितवन्तः,एतयो र्मुखाभ्यां सर्व्वां कथां ज्ञास्यथ। देवता- २८
प्रसादभक्ष्यं रक्तं गलपीडनमारितप्राणिभक्ष्यं व्यभिचारकर्म्मचेमानि

सर्व्वाणि युष्माभिः त्याज्यानि; एतत् प्रयोजनीयाज्ञाव्यतिरेकेन युष्माकम्
उपरि भारमन्यं न न्यसितुं पवित्रस्यात्मनोऽस्माकञ्च उचितज्ञानम् अभ-
२९ वत्; अतएव तेभ्यः सर्व्वेभ्यः स्वेषु रक्षितेषु यूयं भद्रं कर्म्म करिष्यथ।
युष्माकं मङ्गलं भूयात्।

३० तदनन्तरं ते विसृष्टाः सन्त आन्तियखियानगर उपस्थाय लोक-
३१ निवहं संगृह्य पत्रम् अददन्। ततस्ते तत्पत्रं पठित्वा सान्त्वनां प्राप्य सानन्दा
३२ अभवन्। अनन्तरं यिहूदासीलौ स्वयं प्रचारकौ भूत्वा भ्रातृगणं नानो-
३३ पदिश्य तान् सुस्थिरान् अकुरुताम्। इत्थं तौ तत्र तैः साकं कतिपय-
दिनानि यापयित्वा पश्चात् प्रेरितानां समीपे परावृत्य गमनार्थं तेषां
३४ सन्निधेः कल्याणेन विसृष्टावभवतां; किन्तु सीलस्तत्र स्थातुं वाञ्छि-
३५ तवान्। अपरं पौलबर्णब्बौ बहवः शिष्याश्च लोकान् उपदिश्य प्रभोः सुसं-
वादं प्रचारयन्त आन्तियखियायां कालं यापितवन्तः।

३६ तदनन्तरं कतिपयदिनेषु गतेषु पौलो बर्णब्बाम् अवदत् आगच्छावां
येषु नगरेष्वीश्वरस्य सुसंवादं प्रचारितवन्तौ तानि सर्व्वनगराणि पुनर्गत्वा
३७ भ्रातरः कीदृशाः सन्तीति द्रष्टुं तान् साक्षात् कुर्व्वः। तेन मार्कनाम्ना
३८ विख्यातं योहनं सङ्गिनं कर्त्तुं बर्णब्बा मतिमकरोत्; किन्तु स पूर्व्वं
ताभ्यां सह कार्य्यार्थं न गत्वा पाम्फूलियादेशे तौ त्यक्तवान् तत्कारणात्
३९ पौलस्तं सङ्गिनं कर्त्तुम् अनुचितं ज्ञातवान्। इत्थं तेषाम् अतिशय-
विरोधस्योपस्थितत्त्वात् तौ परस्परं पृथगभवतां ततो बर्णब्बा मार्कं
४० गृहीत्वा पोतेन कुप्रोपद्वीपं गतवान्; किन्तु पौलः सीलं मनोनीतं कृत्वा
४१ भ्रातृभिरीश्वरानुग्रहे समर्पितः सन् प्रस्थाय सुरियाकिलिकियादेशाभ्यां
मण्डलीं स्थिरां कुर्व्वन् अगच्छत्।

१६ षोडशोऽध्यायः।

१ तिमथेस्त्वक्छेदः ६ फिलिपीनगरं प्रति पौलस्य गमनं ११ लुदियानाम्नो मनः-
परिवर्त्तनमज्जने १६ पौलेन गणकभूतग्रस्तकन्यायाः स्वस्थता तत्कारणात् तद्धि-
पतीनां क्रोधः २५ तस्मात् पौलसीलयोः कारावन्धनं कारारक्षकस्य मनःपरि-
वर्त्तनं मज्जनञ्च ३५ पौलसीलयोः कारातो मोचनञ्च।

१ तदनन्तरं पौलो दर्ब्बीलूस्त्रानगरयोरुपस्थितोऽभवत् तत्र तिमथियनामा

शिष्य एक आसीत्। स विश्वासिन्या यिहूदीयाया योषितो गर्ब्भजातः २
किन्तु तस्य पितान्यदेशीयलोकः, अपरं स जनो लूस्त्रिकनियनगर-
स्थानां भ्रातृणां समीपेपि सुख्यातिमान् आसीत्। तं स्वेन सह गन्तुं ३
मतिं कृत्वा पौलस्तं गृहीत्वा तद्देशनिवासिनां यिहूदीयानाम् अनुरोधात्
तस्य त्वक्छेदं कृतवान् यतस्तस्य पिता भिन्नदेशीयलोक इति सर्व्वैरज्ञा-
यत। ततः परं तौ नगरे नगरे भ्रमित्वा यिरूशालमस्थैः प्रेरितै र्लोकप्राची- ४
नैश्च निरूपितं यद् व्यवस्थापत्रं तत् तदनुसारेणाचरितुं लोकेभ्यो दत्त-
वन्तौ। तेनैव सर्व्वा मण्डल्यः ख्रीष्टधर्म्मे सुस्थिराः सत्यः प्रतिदिनं वर्द्धिता ५
अभवन्।

तदनन्तरं तयोः फ्रुगियागालातियादेशाभ्यां गतयोः सतोः पवित्र आत्मा ६
तौ आशियादेशे कथां प्रकाशयितुं प्रतिषिद्धवान्। ततो मुसियादेश उप- ७
स्थाय बिथुनियां गन्तुम् उद्यतयोस्तयोः सत्योस्तद् देशमपि गन्तुम् आत्मा
तौ नान्वमन्यत। तस्मात् तौ मुसियादेशं परित्यज्य त्रोयानगरं गत्वा ८
समुपस्थितौ। अपरञ्च रात्रौ पौलः स्वप्ने दृष्टवान् एको माकिदनियलोक- ९
स्तिष्ठन् विनयं कृत्वा तस्मै कथयति माकिदनियादेशम् आगत्यास्मान्
उपकुर्व्विति। तेनेत्थं स्वप्ने दर्शनात् प्रभुस्तद्देशीयलोकान् प्रति सुसंवादं १०
प्रचारयितुम् अस्मान् आहूयतीति निश्चितं बुद्ध्वा वयं तूर्णं माकिदनि-
यादेशं गन्तुम् उद्योगम् अकुर्म्म।

ततः परं त्रोयानगराद् यात्रां कृत्वा, ऋजुमार्गेण सामथ्राकियोपद्वीपेन ११
गत्वा परेऽहनि नियापलिनगर उपस्थिताः। तस्माद् गत्वा माकिदनि- १२
यान्तर्व्वर्त्तिनवीनवसतिस्थानं यत् फिलिपीनामप्रधाननगरं तत्रोप-
स्थाय कतिपयदिनानि तत्र स्थितवन्तः। अपरञ्च विश्रामवारे नगराद् १३
गत्वा नदीतटे यत्र प्रार्थनाचार आसीत् तत्रोपविश्य समागता नारीः
प्रति कथां प्राचारयाम। ततः थुयातीरानगरनिवासिनी धूष- १४
राम्बरविक्रायिणी लुदियानामिका काचिद् ईश्वरसेविनी या योषित्
तस्याः मनसि पौलोक्तवाक्ये मनो निधातुं प्रभुः प्रवृत्तिं जनितवान्। अतः १५

सा योषित् सपरिवारा मज्जिता सती विनयं कृत्वा कथितवती, युष्माकं
विचाराद् यदि प्रभौ विश्वासिनी जाताहं तर्हि मम गृहम् आगत्य
तिष्ठत। इत्थं सा यत्नेनास्मान् अस्थापयत्।

१६ अनन्तरं प्रार्थनागृहगमनकाले यस्या गणनया तदधिपतीनां बहु-
धनोपार्जनं जातं तादृशी गणकभूतग्रस्ता काचन कन्यागत्यास्मान् साक्षात्
१७ कृतवती। सास्माकं पौलस्य च पश्चाद् एत्य प्रोच्चैः कथामिमां कथित-
वती, मनुष्या एते सर्व्वोपरिस्थस्येश्वरस्य सेवका भूत्वास्मान् प्रति परि-
१८ त्राणस्य मार्गं प्रकाशयन्ति। सा कन्या बहुदिनानि तादृशम् अकरोत्;
तस्मात् पौलो दुःखितः सन् मुखं परावर्त्त्य तं भूतमवदद्, अहं यीशुख्रीष्टस्य
नाम्ना त्वामाज्ञापयामि त्वमस्या वहिर्गच्छ; तेनैव तत्क्षणात् स भूतस्तस्या
१९ वहिर्गतः। तदा स्वेषां लाभस्य प्रत्याशा विफला जातेति विलोक्य
तस्याः प्रभवः पौलं सीलञ्च धृत्वाकृष्य विचारस्थानेऽधिपतीनां समीपम्
२० आनयन्। ततः शासकानां निकटं नीत्वा रोमिलोका वयम् अस्माकं
२१ यद्व्यवहरणं ग्रहीतुम् आचरितुञ्च निषिद्धं; इमे यिहूदीयलोकाः सन्तोपि
२२ तदेव शिक्षयित्वा नगरेऽस्माकम् अतीव कलहं कुर्व्वन्ति। इति कथिते
सति लोकनिवहस्तयोः प्रातिकूल्येनोदतिष्ठत् तथा शासकास्तयो र्वस्त्राणि
२३ छित्वा वेत्राघातं कर्त्तुम् आज्ञापयन्। अपरं तयो र्बहुषु प्रहारेषु सत्सु तौ
२४ कारां नीत्वा सावधानं रक्षितुं कारारक्षकम् आदिशन्। इत्थम् आज्ञां प्राप्य
स ताव् अभ्यन्तरस्थकारां नीत्वा पादेषु पादपाशीभि र्बद्धा स्थापितवान्।

२५ अथ निशीथसमये पौलसीलावीश्वरमुद्दिश्य प्रार्थनां गानञ्च कृतवन्तौ।
२६ तदाकस्मात् महान् भूमिकम्पोऽभवत् तेन भित्तिमूलेन सह कारा
कम्पिताभूत् अपरञ्च तत्क्षणात् सर्व्वाणि द्वाराणि मुक्तानि जातानि
२७ सर्व्वेषां बन्धनानि च मुक्तानि। अतएव कारारक्षको निद्रातो जागरित्वा
कारायां द्वाराणि मुक्तानि दृष्ट्वा वन्दिलोकाः पलायिता इत्यनुमाय
२८ कोषात् खड्गं वहिः कृत्वात्मघातं कर्त्तुम् उद्यतः। किन्तु पौलः
प्रोच्चैस्तमाहूय कथितवान् पश्य वयं सर्व्वेऽत्रास्महे त्वं निजप्राणहिंसां

मा कार्षीः। तदा प्रदीपम् आनेतुम् उक्त्वा स कम्पमानः सन् उल्लम्फ्या- २९
भ्यन्तरम् आगत्य पौलसीलयोः पादेषु पतितवान्। पश्चात् स तान् वहि- ३०
रानीय पृष्टवान् हे महेच्छौ परित्राणं प्राप्तुं मया किं कर्त्तव्यं? ततस्तौ ३१
कथितवन्तौ प्रभौ यीशुख्रीष्टे विश्वसिहि तेनैव त्वं सपरिवारः परित्राणं
प्राप्स्यसि। ततः परं तस्मै तस्य गृहस्थितसर्व्वलोकेभ्यश्च प्रभोः कथां ३२
कथितवन्तः। अपरञ्च तस्या रात्रेस्तस्मिन्नेव दण्डे स तौ गृहीत्वा तयोः ३३
प्रहाराणां क्षतानि प्रक्षालितवान् ततः स स्वयं तस्य सर्व्वे परिजनाश्च
मज्जिता अभवन्। पश्चात् तौ स्वगृहमानीय तयोः सम्मुखे खाद्यद्रव्याणि ३४
स्थापितवान् तथा स स्वयं तदीयाः सर्व्वे परिवारास्चेश्वरे विश्वसन्तः
सानन्दिता अभवन्।

दिन उपस्थिते तौ लोकौ परित्यजेति कथां कथयितुं शासकाः पदाति- ३५
गणं प्रेषितवन्तः। ततः कारारक्षकः पौलाय तां वार्त्तां कथितवान् युवां ३६
त्याजयितुं शासका लोकान् प्रेषितवन्त इदानीं युवां वहिर्भूत्वा कुशलेन
प्रतिष्ठेतां। किन्तु पौलस्तान् अवदत् रोमिलोकयोरावयोः कमपि ३७
दोषम् न निश्चित्य सर्व्वेषां समक्षम् आवां कशया ताडयित्वा कारायां
बद्धवन्त इदानीं किमावां गुप्तं परित्यक्ष्यन्ति? तन्न भविष्यति स्वयमा-
गत्यावां वहिः कृत्वा नयन्तु। तदा पदातिभिः शासकेभ्य एतद्वार्त्तायां ३८
कथितायां तौ रोमिलोकाविति कथां श्रुत्वा ते भीताः सन्तस्तयोः
सन्निधिमागत्य विनयम् अकुर्व्वन् अपरं वहिः कृत्वा नगरात् प्रस्थातुं ३९
प्रार्थितवन्तः। ततस्तौ काराया निर्गत्य लुदियागृहं गतवन्तौ तत्पश्चाद् ४०
भ्रातृगणं साक्षात्कृत्य तान् सान्त्वयित्वा तस्मात् स्थानात् प्रस्थितौ।

---

१७ सप्तदशोऽध्यायः।

१ थिषलनीकीनगरे पौलेन ख्रीष्टस्य कथाप्रचारः कतिपयलोकानां विश्वास- स्तदन्येषां विरोधः १० पौलसीलयो र्बिरयानगरगमनं ख्रीष्टस्य कथाप्रचारणात् ताडितत्वं १६ आथीनीनगराय पौलस्य गमनं लोकैः सह विचारः २२ अरेय-पागे ख्रीष्टस्य कथाप्रचारणं कियतां लोकानामुपहासः कियतां विश्वसनञ्च।

ततः परं पौलसीलौ आम्फिपल्यापल्लोनियानगराभ्यां गत्वा यत्र १

यिहूदीयानां भजनभवनमेकम् आस्ते तत्र थिषलनीकीनगर उप-
२ स्थितौ, तदा पौलः स्वाचारानुसारेण तेषां समीपं गत्वा विश्रामवारत्रये तैः
३ सार्द्धं धर्म्मपुस्तकीयकथाया विचारं कृतवान्। फलतः ख्रीष्टेन दुःखभोगः
कर्त्तव्यः श्मशानादुत्थानञ्च कर्त्तव्यम्, अपरं युष्माकं सन्निधौ यस्य यीशोः
प्रस्तावं करोमि स ईश्वरेणाभिषिक्तः स एताः कथाः प्रकाश्य प्रमाणं
४ दत्त्वा स्थिरीकृतवान्। तस्मात् तेषां कतिपयजना अन्यदेशीया बहवो
भक्तलोका बह्व्यः प्रधाननार्य्यश्च विश्वस्य पौलसीलयोः पश्चाद्गामिनो जाताः।
५ किन्तु विश्वासहीना यिहूदीयलोका ईर्ष्यया परिपूर्णाः सन्तो हट्टस्य
कतिपयलम्पटलोकान् सङ्गिनः कृत्वा जनतया नगरमध्ये महाकलहं कृत्वा
यासोनो गृहम् आक्रम्य प्रेरितान् धृत्वा लोकनिवहस्य समीपम् आनेतुं
६ चेष्टितवन्तः। किन्तु तेषामुद्देशम् अप्राप्य यासोनं कतिपयान् भ्रातृंश्च
धृत्वा नगराधिपतीनां निकटमानीय प्रोच्चैः कथितवन्तो ये मनुष्या
जगदुद्वाटितवन्तस्ते ऽत्राप्युपस्थिताः सन्ति एष यासोन् आतिथ्यं कृत्वा तान्
७ स्थापितवान्। अपरं यीशुनामक एको राजास्तीति कथयित्वा ते कैसर-
८ स्याज्ञाविरुद्धं कर्म्म कुर्व्वन्ति। तेषां कथामिमां श्रुत्वा लोकनिवहो
९ नगराधिपतयश्च समुद्विग्ना अभवन्। तदनन्तरं यासोनस्तदन्येषाञ्च लग्नकान्
गृहीत्वा तान् परित्यक्तवन्तः।

१० ततः परं भ्रातृगणो रजन्यां पौलसीलौ शीघ्रं बिरयानगरं प्रेषितवान्
११ तौ तत्रोपस्थाय यिहूदीयानां भजनभवनं गतवन्तौ। तत्रस्था लोकाः
थिषलनीकीस्थलोकेभ्यो महात्मान आसन् यत इत्थं भवति न वेति ज्ञातुं
१२ ते दिने दिने धर्म्मग्रन्थस्यालोचनां कृत्वा स्वैरं कथाम् अगृह्लन्। तस्माद्
अनेका यिहूदीया अन्यदेशीयानां मान्या स्त्रियः पुरुषाश्चानेका व्यश्वसन्।
१३ किन्तु बिरयानगरे पौलेनेश्वरीया कथा प्रचार्य्यतेति थिषलनीकीस्था
यिहूदीया ज्ञात्वा तत्स्थानमप्यागत्य लोकानां कुप्रवृत्तिम् अजनयन्।
१४ अतएव तस्मात् स्थानात् समुद्रेण यान्तीति दर्शयित्वा भ्रातरः क्षिप्रं पौलं
१५ प्राहिण्वन् किन्तु सीलतिमथी तत्र स्थितवन्तौ। ततः परं पौलस्य